

श्रीयोगीन्द्रग्रन्थमालायाः श्रीरामानन्दवेदान्तविषयकं
द्वितीयं तृतीयं चतुर्थञ्च पुष्पम् ।

श्रीसाकेतविहारिणे नमः
प्रस्थानत्रयानन्दभाष्यकाराय श्रीरामानन्दाचार्यायनमः ।

महामहोपाध्यायस्वामिश्रीरघुवराचार्य-वेदान्तकेसरिद्वारा संशोधिता:
पण्डितवर्य-श्रीलक्ष्मीधरविरचिता

# श्रीभगवन्नामकौमुदी

---

श्रीकोलद्वारपीठसंस्थापक श्रीकीलदेवाचार्यप्रणीतः

# अध्यासध्वंसलेशः

---

१००८ जगद्गुरु श्रीमदनन्तानन्दाचार्यस्वामि प्रणीतः

# सिद्धान्तदीपकः

श्रीशेषमठाधीश-योगीन्द्रस्वामिश्रीरामप्रपन्नाचार्य विरचित-
किरणावलीसहितः



प्रकाशक
स्वामि रामेश्वरानन्दाचार्यो व्याकरणवेदान्ताचार्यसाहित्य-
रत्नम् श्रीरघुवररामानन्दवेदान्त-महाविद्यालयः
श्रीकोसलेन्द्र मठ अहमदाबादः-७





श्रीयोगीन्द्रग्रन्थमालायाः श्रीरामानन्दवेदान्तविषयकं द्वितीयं पुष्पम्

श्रीसाकेतविहारिणे नमः ।

श्रीप्रस्थानत्रयानन्दभाष्यकाराय नमः ।

**श्रीमदनन्तानन्दाचार्यपादपद्मोपजीविपण्डितवर्य-**

**श्रीलक्ष्मीधरविरचिता**

# श्रीभगवन्नामकौमुदी

संशोधकः

महामहोपाध्यायस्वामि-श्रीरघुवराचार्य-न्यायमीमांसोपाध्याय-

तर्कवेदान्ततीर्थव्याकरणाचार्यवेदान्तशिरोममणि-

दर्शननिधि-श्रीशेषमठाधीशः

प्रकाशकः

स्वामिरामेश्वरानन्दाचार्यो व्याकरणवेदान्ताचार्यसाहित्यरत्नम्

श्रीरघुवररामानन्दवेदान्त-महाविद्यालयः,

श्रीकोसलेन्द्रमठः, अहमदाबादः-७

प्रतिः १०००

मूल्य ६.००





भास्कर प्रिन्टर्स-प० शिवदीन का रास्ता, जयपुर ।

।। श्रीरामो विजयतेतराम् ।।

आनन्दभाष्यकाराय श्रीरामानन्दाचार्याय नमः

श्रीमदनन्तानन्दाचार्यपादपद्मोपजीवि पण्डितवर्य

श्रीलक्ष्मीधरविरचिता

# * श्रीभगवन्नामकौमुदी *

आकृष्टिः कृतचेतसां सुमहतामुच्चाटनं चांहसा
माचण्डालममूक लोकसुलभो वश्यश्च मोक्षश्रियः ।
नो दीक्षां न च दक्षिणां न च पुरश्चर्यां मनागीक्षते ।
मन्त्रोऽयं रसनास्पृगेव फलति श्रीरामनामात्मकः ।। १ ।।
अंहः संहरदखिलं सकृदुदयादेव सकललोकस्य ।
तरणिरिव तिमिरजलधिं जयति जगन्मङ्गलं हरेर्नाम ।। २ ।।
कारुण्यामृतनिर्झरः सुरसरिज्जन्माकरः श्रीवधू
लीलाब्जं जकामिनीकुचतटीकस्तूरिकास्थासकः ।
उत्तंसः सुरयोषितां मुनिमनोवश्यौषधीपल्लवो
यस्याङ्घ्रिः सुरवल्लभः स जयति श्रीपुण्डरीकप्रियः ।। ३ ।।
कररुहकुलिशैर्द्विषतां चरणाम्बुजनखरकान्तिभिर्भजताम् ।
हृदयग्रन्थीन् भिन्दन् मनसि नृसिंहः समुल्लसतु ।। ४ ।।
यदंघ्रिरेणुबीजानि जनैरुप्तानि मूर्द्धसु ।
सद्यः सुरद्रुमायन्ते श्रीधरः स श्रियेऽस्तु वः ।। ५ ।।

उल्लसति लोचनाग्नौ जगदवदानानि जुह्वतो यस्य ।
प्रथमाहुतिर्मनोजः स जयति देवः पुरां भेत्ता ।। ६ ।।
यत्पादपद्मनखकान्तितरङ्गजीर्य्यज्जम्बालजाड्ङ्किकधियां न धियामभूमिः ।
निःसीमसौख्यजलधिर्जयतादनन्तः सोऽस्मद्गुरुर्जगदनुग्रहजागरूकः ।। ७ ।।
अपि च—
अधीशं निःस्वानां शमनदतटीषु प्रवसतामशेषा-
णामाद्यं गुणगरिमनिर्मुक्तमपि यम् ।
मृषामानाद् दूरं श्रुतिरुपचरन्ती सविनयं
शनैर्यत्नादन्तर्णयति सुभगानां परिदृढम् ।। ८ ।।
चेतश्चकोरसन्तोषपीयूषाम्बुधिवृद्धये
इयं विस्तार्य्यते श्रीमद्भगवन्नामकौमुदी ।। ९ ।।

## विचारस्यारम्भस्तदङ्गानि संशयाश्च

अत्र श्रीमद्भगवन्नाममाहात्म्यप्रतिपादकानि पुराणवचनान्युदाहृत्य विचार्य्यन्ते—किमेतान्यविवक्षितस्वार्थान्युत स्वार्थपराणीति ? यदा स्वार्थपराणि, तदापि किं साक्षात्पापक्षयहेतोः कस्यचिदङ्गभावेन भगवन्नामकीर्तनं पापक्षयहेतुः ? उत स्वप्राधान्येन ? यदापि स्वप्राधान्येन, तदापि किं श्रद्धाभक्तिज्ञानवैराग्याभ्यासदेशकालविशेषादिसापेक्षत्वेन ? उत तन्नैरपेक्ष्येणेति ?

## विचारस्य प्रयोजनम्

अस्य विचारस्य सकलश्रुतिस्मृतीतिहासपुराणागमार्थसतत्त्वसन्देहसन्दोहलतालवित्रचरणनखचन्द्रिकाञ्चलस्य श्रीमदनन्तानन्दरघुनाथस्य करुणाकादम्बिनीमुक्तसूक्तिसुधोद्धारासारैः स्मृतिपुराणवचनविरोधाभासभावितनितांतमसृणशङ्कापङ्कप्रक्षालनेन तस्यैव रघुराजशिरोमणेः सर्वतः प्रसृमरपरमकारुण्यसुधार्णवस्य निरंकुशमहिमधामनि श्रीरामनामनि स्वचेतसः समाधानमेव प्रयोजनम् ।

तत्र केषाञ्चिदतिसाहसिकानामत्यावेशोऽयमनूद्यमानोऽपि महापतनहेतुरपि भगवन्नाममाहात्म्यमननस्य भगवदुपासनासमानसौभाग्यत्वान्निराकरणार्थमनूद्यते ।

## पूर्वपक्षः—इतिहासपुराणानां स्वार्थेऽप्रामाण्यम्

तद्यथा—अविवक्षितस्वार्थान्यैव पुराणवचनानीति, तथा हि कार्य्य एवार्थे वेदस्य प्रामाण्यं न सिद्धे तत्रैव शब्दस्य शक्तितात्पर्य्ययोरवधारितत्वात् । ततश्च विधिवाक्यस्यैव स्वार्थे प्रामाण्यं न मन्त्रार्थवादोपनिषदाम्, किन्तु तासां कथञ्चित् अनुविध्युपयुक्तार्थत्वं जपार्थत्वं वा, इतिहासपुराणयोस्तु तन्मूलत्वान्नतरां स्वार्थे प्रामाण्यगन्धोऽपीति ।

## मतान्तरेण पूर्वपक्षः

अन्ये तु मन्यन्ते; न कार्य्य एवार्थे वेदस्य प्रामाण्यमपि तु सिद्धेऽपि, तत्रापि शक्तितात्पर्य्ययोराचार्य्यैरेव निरूपितत्वात् । मन्त्रार्थवादयोस्तु मानान्तरानधिगतं तदविरुद्धमर्थमवगमयतोरन्यपरत्वेऽपि स्वार्थे प्रामाण्यं भवत्येव । तात्पर्य्यं हि न प्रमितिमुत्पादयति किन्तु केवलं तत्र प्रतिबन्धं निरुन्धे, तद्यदि स्वरसत एवं निष्प्रतिबन्धमवधारितरूपमनधिगतविषयञ्च विज्ञानमुत्पद्यते शब्दात्, तदान्तरेणापि तात्पर्य्यं तस्य प्रामाण्यं किं न स्यात् ? तत्सङ्गानविगानयोः पुनरनुवादत्वगुणवादत्वे, उपनिषदां पुनरन्यशेषत्वादपास्तसमस्तानर्थमनन्तानन्दानुभवैकरसमनधिगतात्मतत्त्वमवगमयन्तीनां प्रमाणान्तरविरोधेऽपि तस्यैवाभासीकरणेन च स्वार्थ एव प्रामाण्यं भवत्येव । तदुक्तं भट्टपादैः—"अथ वेतिहासपुराणप्रामाण्यात् सृष्टिप्रलयावपीष्येते" इति ।

तथापि देवतातत्त्वतत्पराणां पुराणानामनुष्ठेयार्थपराणां स्मृतीनां च स्वे स्वे गोचरे गरीयस्त्वाद् गुरुतरप्रायश्चित्तविधायिमन्त्रादिवाक्यविरोधे दुस्तरदुरितक्षयोद्देशेन नामसंकीर्त्तनमात्रं विधातुमशक्नुवन्ति पुराणवचनानि भजनीयदेवतास्तावकत्वमेवाश्रयन्ते, यस्याः सकृत्कीर्त्तनमप्येतादृक्, सा

पुनराप्रायणमुपासिता किं न करोतीति ? तस्मादविवक्षितार्थत्वमेवैषामिति

उत्तरपक्षः—पुराणामपि स्वार्थे प्रामाण्यम

अत्राभिधीयते–यथा कार्य्ये सिद्धे च वेदस्य प्रामाण्यमविशिष्टं तथा पुराणानामपि, सर्वेषु पुराणेषु वर्णाश्रमधर्माणां प्रबन्धेन प्रतिपादनात्, श्रीमद्भागवते तावत्—

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥

इति पुराणस्य त्रिकाण्डरूपत्वप्रतिपादनात् श्रीमहाभारते च—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥

इति धर्मब्रह्मणोरविशेषेण प्रतिपाद्यत्वप्रतिज्ञानात्, प्रतिपादनाच्च । भविष्योत्तरमत्स्यपुराणादिषु च धर्मप्रतिपादनसौभाग्यस्यैव भूयस्त्वाच्च नातिशङ्कनीयमेव धर्मे प्रामाण्यं पुराणानाम् । तत्र यथा काण्डभेदेन नानार्थत्वमविरुद्धं वेदानाम्, तथा पुराणानामपि भविष्यति ।

अथ पुष्कराक्षसिद्धान्ततात्पर्यालोचनया वेदा ब्रह्मात्मविषया एव,

ब्रह्मात्मविषया वेदास्त्रिकाण्डविषया इमे ।
परोक्षवादा ऋषयः परोक्षं च मम प्रियम् ॥
परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्म्माणि विधत्ते ह्यगदं यथा ॥

इत्यादिशास्त्रपर्य्यालोचनया च त्रिकाण्डस्यैकवाक्यत्वं वेदेषु, एवं पुराणेष्वपि । ततश्च यस्माद्वाक्याद्योऽर्थः स्वरसतोऽवगम्यते सिद्धः कार्य्यो वा तत्र तत्प्रमाणमेव पुराणवचनमिति ।

## पुराणानामर्थवादत्वनिरासः

ननु भवतु च धर्म्मेऽपि तात्पर्यं पुराणानाम्, नामकीर्त्तनविषयाणां पुनः पौराणार्थवादानां स्मार्त्तप्रायश्चित्तविधिविरोधे प्रामाण्यन्न युज्यते।

इयमविदितमीमांसावृत्तान्तानां विभीषिका, तथा हि—किमिदमर्थवादत्वम् ? अविधित्वं विधिशेषत्वं वातत्परत्वं वा ? यदि तावदविधित्वं तत्, किं लिङादिप्रत्ययविरहात् ? तद्वाच्यविरहाद् वा ? न तावल्लिङादिप्रत्ययविरहात्, "पूषा प्रपिष्टभागो यदाग्नेयोऽष्टाकपालो भवति" इत्यादीनामप्यविधित्वप्रसङ्गात् ।

ननु तत्र लिङादिप्रत्ययविरहेऽपि तद्वाच्यमस्ति, कालत्रयानवच्छिन्नेन द्रव्यदेवतासम्बन्धेन यागविधिपरिकल्पनात् इह तु न तदस्तीत्यविधित्वम् ।

तदयुक्तम्, इहापि—प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ।

इत्यादौ कालत्रयानवच्छिन्नेन साध्यभावनसम्बन्धेन विधेः कल्पनात् ।

अथ—हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ।

इत्यादौ वर्तमानापदेशादविधित्वम् ? तर्हि "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" "अग्निहोत्रं जुहोति" इत्यादीनामप्यविधित्वप्रसङ्गः । अथ तत्रापूर्वत्वाल्लकारपरिणामेन पञ्चमलकाराश्रयणेन वा विधित्वम्, इहापि तथैव भविष्यति ।

अथ विधिशेषत्वम्, कोऽसौ विधिर्यच्छेषत्वमेषाम् ? किं नामकीर्त्तन विषयः ? अन्यो वा ? न तावदन्यः, अन्यस्य विधेरसन्निधानात् नामसंकीर्त्तनस्यैव स्वातन्त्र्येणोपसंहाराच्च । अथ नामकीर्त्तनविषय एव, तर्हि तस्य नियोज्यविशेषणान्तराश्रवणादन्यस्य कथंभावे वाश्रवणादार्थवादिकं पापनिर्हरणमेव नियोज्यविशेषणत्वेन सम्बध्यते रात्रिसत्रन्यायेन । ततश्च कार्य्यान्वयान्न विधिशेषत्वम् प्रतिपत्तिमात्रान्वयिनो हि विधिशेषाः ।

ननु प्रदेशान्तरस्थितमपि नामसंकीर्तनं प्रदेशान्तरस्थस्यापि "विष्णुरुपांशु यष्टव्योऽजामित्वाय" इत्यादेः क्रतुविधेरङ्गमुपासनाविधेर्वा, तदव्यभिचा-

रिविष्णवाख्यदेवतासम्बन्धमुखेन, पर्णमयीत्ववत् । ततश्च "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यादिफलश्रुतेरिव पापक्षयफलश्रुतेरप्यर्थवादत्वम्, परार्थत्वात् ।

तदयुक्तम्, परार्थत्वासिद्धेः,

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ।।

इति ध्यानयज्ञार्चनकार्य्ये युगभेदेन कीर्तनस्य व्यवस्थापितत्वात् ।

नन्वस्यार्थवादत्वात् कथं तद्बलेन पर्णमयीन्यायप्रतिक्षेपः ?

उच्यते—फलांशस्तावदास्ताम्, ध्यानयज्ञार्चनाना युगभेदेन व्यवस्थया श्रेयोहेतुत्वानुवाद एवार्थवादत्वे नावकल्पते, स्तुतावनुपयोगात्, स्तुतिर्हि न देशकालव्यवस्थामवलम्बते, अपि त्वदेशकालेऽपि स्तुत्यर्थस्य पुरुषार्थत्वम् ।

ननु न कीर्तनमिह स्तूयते, अपि तु कलिः, युगान्तरेषु महता प्रयासेन यत्साध्यते तत्कलावल्पेनेति ।

एवमपि कृतादिषु ध्यानादीनां व्यवस्था नोच्यते किं तु यत् कृतादिषु ध्यानयज्ञार्चनैराप्नोति तत्कलौ कीर्तनेनैवेति वक्तव्यम्, न च तथोच्यते, उत्तरोत्तरयुगोत्कर्षमुखेन प्रतिपादने कलेः सर्वोत्कर्षविवक्षायां विरम्य व्यापारः प्रसज्जेत तस्मान्न स्तुतिपरमिदम् अपि तु फलपरमिति ।

ननु व्यवस्थावाक्यं तावदास्ताम्, इतरेषां पुनः पर्णमयीन्यायेनार्थवादत्वं भविष्यति, ततश्च व्यवस्थावाक्यस्यापि कीर्त्तनविषयत्वादर्थवादत्वमेव भविष्यति ।

मैवम्, सिद्धे व्यवस्थावाक्यस्यार्थवादत्वे पर्णमयीन्यायावतारः, अवतीर्णे पर्णमयीन्याये च तेषामर्थवादत्वम्, अथवादत्वे च तेषां व्यवस्थावाक्यस्यचार्थवादत्वमिति चक्रकप्रसङ्गात् ।

अपि च वैष्णवेषु यागेषु विष्णोः स्वरूपेण न देवतात्वम्, अपि तु विष्णुशब्दानुविद्धतया, तत्संजल्पितस्यैव तस्य तत्रोद्देश्यतया विधानात् ।

अत एव हि तेनैव शब्देनोद्देशः, न शब्दान्तरेण, "विष्णवे शिपिविष्टाय शृते चरुम्" इत्यादौ देवताभेदोऽपि । कीर्तने तु न विष्णुशब्दानुविद्धस्यैव तस्य विषयत्वम्, नामान्तराणामपि तत्र विनियोगात् ततश्च—

वैकुण्ठनामग्रहणमशेषाघहरं विदुः

इत्यादेः पदार्थसम्बंधमुखेनापि क्रतौ नानुप्रवेशः अतो न स्तुतिपरत्वं फलश्रुतेरिति ।

अपि च संभवति फलपरत्वे न स्तुतिपरत्वं युक्तम् गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् । पर्णमयीवाक्ये हि पर्णमयीत्वस्य द्रव्यस्य क्रियामनाश्रित्य फलसाधनत्वानुपपत्तेः, प्रदेशान्तरवर्तिनीं च क्रियामप्राप्ता-माश्रित्य विधानयोगात् । क्रियासम्बन्धे फलसम्बन्धे च विधेये वाक्यभेद-प्रसंगात् क्रतुविधिशेषत्वमेव विधीयते, ततश्च फलश्रुतेरर्थवादत्वम् । इह पुनः संकीर्तनस्य क्रियात्वात्, तस्याश्च स्वतः फलसाधनत्वोपपत्तेः फलार्थ-मेव विधानम् "पृथग्घ्यप्रतिबन्धः फलम्" इति न्यायेन । तस्माद्यथार्थवादा एताः फलश्रुतयो न गुणवादा इति ।

अथातत्परत्वम् तदपिस्वार्थपरत्वे बाधकभावात् ? साधकाभावाद्वा ? न तावद्बाधकभावाद्, अर्थान्तरपरत्वमेव हि तस्य बाधकम्, तदिह नास्तीत्य-वोचाम । नापि साधकाभावात्, अध्ययनविधेरेव साधकत्वात्, स हि प्रयोजनशून्यमक्षरमात्रमपि न ग्राहयति, अत एव कुत्रचिदेकत्र तात्पर्य्यमागृ-ह्णाति, तत्रान्यपरत्वस्य पराकृतत्वात् स्वार्थपरत्वं परिशिष्यते ।

अपि च, उपक्रमोपसंहारयोरेकरूपत्वं पौनःपुन्यमनधिगतत्वमर्थवत्त्व-मुपपत्तिः प्रशंसा चेति षड्विधानि तात्पर्य्यलिङ्गानि, तानि चाजामिलो-पाख्यानादिषु स्पष्टमुपलभ्यन्ते, व्याकरिष्यन्ते च यथावसरम् । तस्मान्नै-वातत्परत्वं नामसंकीर्तनविषयाणां वचनानाम् । अतो यत्किञ्चिदेतदर्थवाद-रूपत्वमिति ।

## नामकीर्तनवाक्यानां विधित्वसमर्थनम्

अपि च, मानान्तरानधिगतं कृतियोग्यमिष्टसाधनमेव विधिः, स च लिङ्गादियुक्तेन वाक्येनावगम्यतां वाक्यान्तरेण वा कस्तत्राग्रहः ? इहापि—

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥

इति प्रमाणान्तरानधिगतं पापक्षयसाधनत्वमवगम्यते नामकीर्तनस्य, कृतियोग्यं च तत् क्रियात्वात् कालसंस्पर्शानवगमात् ।

ननु यत्र सहल एव कालसंसर्गं तत् कार्यम्, यथा यजेतेत्यादिनाभिहितम् पचक्कसमभिहितं तु न तथा, नामकीर्तनमित्यादेरस्तीत्यादिना सामानाधिकरण्येऽप्यविरोधात् ।

तदयुक्तम्, कृत्यानामविधित्वप्रसंगात् ते हि कालसंबन्धेनावरुध्यन्ते कर्तव्यमस्तीत्यादिप्रयोगदर्शनात्, तस्मात् कालसंस्पर्शानवगम एव कार्य्यत्वोपयोगी नतदसहत्वम्, सर्वथा कालासंबन्धे शून्यत्वप्रसङ्गाद्, उक्तं च भाष्ये "भविष्यश्चैषोऽर्थः" इति, तस्माद् दुर्वार एव नामसंकीर्तनविषयो विधिः ।

भवतु वार्थवादत्वमेषाम्, तद्बलादेव विधित्वमनुमिमीमहे, विधिं विना तस्यैवानुपपत्तेः, विधिशेषो ह्यर्थवादः । तत्र च विधावार्थवादिकमेव फलं भविष्यति ।

## नामसङ्कीर्तनविषयाणि विधिवचनानि

अपि च स्पष्टमुपलभ्यन्त एव नामसंकीर्तनविषया विधयः—

तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥

गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ।

"संकीर्तयेज्जगन्नाथम्" "गोविन्देति सदा वाच्यम्"

नामानि तद्रतिकराणि पठेदलज्जः ।
हित्वा लज्जां कलिमलकुलच्छेदकानीरयेद्वा ।
विष्णोर्नामान्यनिशममृतप्राप्तिरेषा चतुर्धा ।।

इत्येवंजातीयका बहवः ।

ननु भवतु नामकीर्तनविषयो विधिः, तथापि नित्य एवासौ "अहरहः स्वाध्यायमधीयीत" इतिवत्;

संकीर्तयेज्जगन्नाथं वेदं वापि समभ्यसेत् ।

इति समभिव्याहारात्, ततश्च घृतकुल्यादिफलश्रुतेरिव पापक्षयफलश्रुतेरर्थवादत्वम् ।

तदयुक्तम्, अविशेषात्, न हि नित्योऽनित्यो वा विधिः फलं विना समाप्यते, ततश्चाश्रुतफलकल्पनादार्थवादिकफलस्वीकरणमेव न्याय्यम् ।

## उपसंहारः

तस्माद्विवक्षितार्थस्यैव नामकीर्तनस्य पापक्षयहेतुत्वप्रतिपादकानि पुराणवचनानीति ।

श्रीरामेति जनार्दनेति जगतां नाथेति नारायणे-
त्यानन्देति दयापरेति कमलाकान्तेति कृष्णेति च ।
श्रीमन्नाममहामृताब्धिलहरी कल्लोलमग्नं मुहु-
र्मुह्यन्तंगलदश्रुनेत्रमवशं मां नाथ नित्यं कुरु ।। १ ।।
कृष्ण कृष्ण मधुसूदन विष्णो कैटभान्तक मुकुन्द मुरारे ।
पद्मनाभ नरसिंह हरे श्रीराम राम रघुनन्दन पाहि ।। २ ।।

इति श्रीमदनन्तानंदाचार्यपादपद्मोपजीविनो लक्ष्मीधरस्य कृतौ
श्रीभगवन्नामकौमुद्यां पुराणवचनानां विवक्षितार्थत्व-
प्रतिपादनं नाम प्रथमः परिच्छेदः ।।

श्रीमते रामानन्दाचार्याय नमः

# श्रीभगवन्नामकौमुदी

## द्वितीयः परिच्छेदः

आकान्त कृष्ण करुणाकर कञ्जनाभ कैवल्यवल्लभ मुकुन्द मुरान्तकेति ।
नामावलीं विमलमौक्तिकहारलक्ष्मलावण्यबन्धनवतीं करवाणि कण्ठे ।।

एवं स्थिते नामकीर्तनस्य पापक्षयं प्रति साधनत्वे पुनरिदं विचार्यते—किं कस्यचित् साधकतमस्याङ्गभूतं तत् ? उत स्वयमेव साधकमिति ?

ननु निर्णीतमेतत् फलश्रुतेरर्थवादत्वनिराकरणेन ।

सत्यम्, तदेव पुनराक्षेपांतरनिराकरणेन दृढीक्रियते स्थूणानिखनन्यायेन ।

### पूर्वपक्ष—स्मृतिपुराणयोर्विरोधे समुच्चयः

तत्र मन्त्राद्युक्तप्रायश्चित्ताङ्गमिति तावत्प्राप्तम्, तथा हि-विकल्प-समुच्चयव्यवस्थानामन्यतमाश्रयणेन स्मृतिपुराणविरोधस्तावदवश्यं परिहर्तव्यः, समानमूलत्वेनान्यतरस्याप्यनतिलङ्घनीयत्वात् । तत्र विकल्पव्यवस्थे तावन्न युज्येते, नित्यवदवगतस्य पाक्षिकत्वे सामान्यश्रुतस्य च विशेषविषयत्वे शब्दवचनस्वारस्यभङ्गप्रसङ्गात्, अतः समुच्चयोऽत्र परिशिष्यते ।

ननु समुच्चयेऽपि निरपेक्षसाधनत्वेनावगतस्य सापेक्षत्वे स्वारस्यभङ्गस्तदवस्थ एव ।

मैवं, नैरपेक्ष्यं हि साधनान्तराभावः, स च नानयोरन्यतरस्यापिविषयः, स्वविषयस्य साधनत्वे साधनांतरस्य चाभावे प्रमेये वाक्यभेदप्रसङ्गात् ।

स तु योग्यप्रमाणान्तरानुदयस्य विषयः, उपलभ्ते तु प्रमाणांतरं साधनान्तरग्राहकम्, अतः प्रमाणद्वयपर्यालोचनायां परस्परसापेक्षत्वात् स्मार्त्त-पौराणयोः समुच्चय एव श्रेयान् ।

नन्वेवमपि समुच्चितयोरनयोर्दर्शपौर्णमासयोरिव कारणत्वमेव किं न स्याद् विपरीतो वाङ्गप्रधानभावः ?

पुराणवचनेभ्य एव भगवद्भजनस्य प्रायश्चित्तकर्माङ्गत्वावगमादिति ब्रूमः । श्रीभागवते तावत्—

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र ! सुराकुम्भमिवापगाः ।।

इति भगवद्भजनस्य प्रायश्चित्ताङ्गत्वमवगम्यते, प्रायश्चित्तानि न पुनन्तीति न तस्यार्थः मन्त्रादिवचनव्याकोपात्, नारायणपराङ्मुखमिति विशेषणवैयर्थ्याच्च । अपि च प्रायश्चित्तान्यनुष्ठितान्यपि नारायणपराङ्-मुखं न पुनन्ति नारायणपरायणं तु पुनन्तीत्यर्थः । अतः स्वतः पुनतां तेषां नारायणपरायणत्वमङ्गमित्यवगम्यते । तथा तत्रैव—

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रं नामसङ्कीर्तनं हरेः ।

इति, तवेति वा, सर्वकर्मसाद्गुण्यार्थत्वं हि हरिकीर्तनस्य सिद्धवदनूद्यते तथा स्कंदपुराणेऽपि—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।।

इति । अनुवादश्च प्राप्तिमनुमापयति निवीताधिकरणन्यायेन, उप-ध्यानविधायकवाक्यशेषे निवीतानुवादवत् । श्रीविष्णुपुराणेऽपि—

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ।

इति कर्माङ्गत्वमवगम्यते हरिस्मरणस्य, यद्यत्र स्मरणं स्वातन्त्र्येण विवक्षित किमिद जपहोमार्चनादिष्विति ? अतः सर्वकर्माङ्गत्वाद् भगवत्कीर्तनस्मरणयोः, प्रायश्चित्तस्यापि तदन्तःपातित्वात्, प्रायश्चित्ताङ्गत्वेनैव नामकीर्त्तनं पापक्षयहेतुर्न स्वतन्त्र मिति ।

## पापध्वंसे नामकीर्त्तनस्य प्राधान्यमित्युत्तरपक्षः

अत्र समाधीयते—स्वप्रधानमेव पुरुषोत्तमकीर्त्तनं पापप्रध्वंसनहेतुः । श्रीभागवते तावत्—

कर्म्मणा कर्म्मनिर्हारो न ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनम् ।।

इति कर्मात्मकप्रायश्चित्तनिन्दापूर्वकम्—

केचित्केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ।।

इति ब्रह्मविद्यासमानस्कन्धतया केवलायाः कीर्तनादिलक्षणाया भगवद्भक्तेः प्रायश्चित्तत्वेनावधारितत्वात् ।

## तत्राजामिलदृष्टान्त.

तथा—

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ।
एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणेत्येतज्जगाद चतुक्षरम् ।।

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ।।

इति तत्र तत्रैवकारश्रवणात्,

एतावतालमघनिर्हरणाय पुंसां सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम् ।

इत्यनेनापि केवलस्य कीर्तनस्य कृत्स्नपापक्षयहेतुत्वमेव समर्थ्यते । यदि हि पर्याप्तिवचनोऽयमलंशब्दस्तदा प्रथमाप्रयोगेण भवितव्यम्, अलं मल्लो मल्लायेतिवत्, इह तु तृतीया दृश्यते, अतो निवारणवचनोऽयमलंशब्द इत्यलमतिप्रसङ्गेनेतिवत् ।

ततश्चायमर्थः, भगवतो गुणकर्मनाम्नां सङ्कीर्तनमिति यत्पुंसामघनिर्हरणायेति एतावता अलम्, एतावन्नानुष्ठेयम्, पापक्षयमात्रस्यातितुच्छत्वात्, भगवत्कीर्तनस्याति गरीयस्त्वात् । एतदेव विवृणोति विक्रुश्येति, आमरणमभ्यस्तमहापापोऽजामिलोऽपि पुत्रं विक्रुश्य न हरिं कीर्तयित्वा, तदपि न स्पष्टं म्रियमाणत्वेन शिथिलकरणत्वात्, तथापि दैवगत्या पुत्रनाम्न एव भगवन्नामत्वात्, मुक्तिं समस्तानर्थनिवृत्तिलक्षणां निरतिशयानन्दरूपां च प्राप्तः, नानर्थैकदेशस्य पापस्य निवृत्तिमात्रम् । तत्रापि मुक्तिः किल बभूवेति नैतदैतिह्यमात्रं किन्त्वयमधुनैव मुक्तिमुपयातीति साङ्गुलिनिर्देशमभिधीयते धर्मराजेन, तत्समये तस्यार्थस्य वर्तमानत्वात् । उक्तलक्षणाया मुक्तेरबहिष्ट्वेनानन्यवेद्यत्वेऽपि भगवल्लोकप्राप्तिलक्षणाया अपि मुक्तेस्तात्पर्यम्, तस्माद्विवक्षितार्थलाभः ।

ततश्चापातालावनितले निमग्नमुपरि च स्वायम्भुवभुवनमुल्लिखन्तं सर्वतोविसारिविविधशाखोपशाखं संसारमहामहीरुहमेव समूलं गिलतो भगवन्नामग्रहणमहादावदहनस्य जननमरणमध्यवर्त्तिनः सर्वानेव क्षणेन शून्यतां नयन्तीभिरनन्तजन्मानुबन्धिनीभिरतिबहलाभिरप्यंहस्तूलपटलीभिः कुक्षिकोटरकुहरप्रान्तोऽपि मनाङ् न पूर्य्यते, तस्य कथं तद्रसने साधनान्तरसाकाङ्क्षत्वशङ्कावतारः ।

## कर्मतो भक्तेः प्राधान्यम्, निरपेक्षसाधनत्वं च

अपि च—

न तथा ह्यघवान्राजन् पूयेत तपआदिभिः ।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥

तस्य कृष्णस्य पुरुषाणां निषेवया, कृष्णे निवेशितेन्द्रियः कीर्तनादिपरः इति—

न निष्कृतैरुदितैर्ब्रह्मविद्भिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम् ॥

इति च, कर्मभक्तिसाध्ययोः शुद्ध्योर्वैसादृश्यमुपदिश्यते, तदपि नाङ्गाङ्गिभावे संभवतीति, अङ्गप्रधानयोरेकफलत्वात् । श्रीविष्णुपुराणेऽपि—

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥

इति कर्मात्मकेभ्यः सकाशात् कृष्णानुस्मरणस्योत्कृष्टत्वमभिधीयते, तदपि प्रायश्चित्ताङ्गत्वे हरिस्मरणस्य न संजाघटीति, अङ्गिनः सकाशादङ्गस्योत्कृष्टत्वायोगात् ।

प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ।

इत्यत्रैकशब्दोऽपि नैरपेक्ष्यमेव प्रतिपादयति, यो हि सजातीयस्मरणमपि द्वितीयं न सहते स कथं जात्यन्तरं सहेत ? श्रीनृसिंहपुराणेऽपि—

इत्युदीरितमाकर्ण्य कृष्णवाक्यं यमेरितम् ।
नारकाः कृष्ण कृष्णेति श्रीनृसिंहेति चुक्रुशुः ॥

इत्यारभ्य प्राप्तनरकाणामपि पापिनां कीर्तनमात्रादेव नरकार्णवादुत्तीर्णानां वैकुण्ठसङ्गम उपवर्ण्यते । श्रीस्कन्दपुराणेऽपि—

हरहरहरशब्दमादितो वै मुहुरभिधाय मुनीन्द्रवृन्दवर्य्यः ।
अपठदखिलमेधघोसतुल्यं सकलहिताय 'नमः शिवाय' शब्दम् ॥

इत्यारभ्य श्रवणमात्रादेव नरकान्निर्गत्य शिवपुरप्राप्तिरभिहिता ।

श्रीविष्णुधर्म्मे तु स्पष्टमेव निरपेक्षसाधनत्वमुपवर्णितम्—

अथ पातकभीनस्त्वं सर्वभावेन भारत ।
विमुक्तान्यसमारम्भा नारायणपरो भव ॥

इति । तथा तत्रैव—

गोविन्देति समुच्चार्य पद क्षपितकिल्विषः ।
क्षत्रबन्धुर्विशुद्धात्मा गोविन्दत्वमुपेयिवान् ॥

इति प्रायश्चित्तपराङ्मुखस्यापि क्षत्रबन्धोः कीर्तनमात्रादेव पापक्षयो दर्शितः ।

तस्मात्केवलमेव हरिकीर्तनं कृत्स्नपापक्षयहेतुः, नान्यसमुच्चितं नतरामन्याङ्गभूतमिति ।

ननु किमिदं कैवल्यं नाम ? किं साधनस्य स्वरूपमेव ? उत साधनान्तराभावः ? उतान्यस्यासाधनत्वम् ? तत्र यदि स्वरूपम्, तर्हि समुच्चयेऽपि स्वरूपस्यानपायादविरोधः । अथ साधनान्तराभावः, तदोभयविधानाद्वाक्यं भिद्यतेत्यवादिष्म । विशिष्टविधाने तु सति साधनान्तरे कृतेऽपि कीर्तने पापक्षयो नाभविष्यत्, साधनान्तराभावविशिष्टस्यैव साधनत्वात् । अथान्यस्यसाधनत्वम्, तदापि वाक्यभेद एव,एकेन वाक्येनोभयविधानायोगात् । अथ विशिष्टविधानमिति चेत्तदाप्यनन्यगतस्यासाधनत्वस्यान्यविशेषणत्वेन विधानायोगात् ।

उच्यते—कारणस्य पौष्कल्यं कैवल्यम्, तदेव च नैरपेक्ष्यम्, पौष्कल्यं कार्यपूर्वक्षणनियतिः, यां सामग्रीमाचक्षते तद्विदः, यदनन्तरं कार्यमवश्यमात्मानं लभते तत्पुष्कलं कारणमिति यावत् । तच्च न साधनान्तरसव्यपेक्षत्वेऽकल्पते । तच्च क्वचिदेकस्य क्वचिद्द्वयोः क्वचिद्बहूनाम्, तत्र यदा द्वयोर्बहूनाम्, वा तदा स्वाश्रये व्यासज्य वर्तते पौष्कल्यम्, यदा पुनरेकस्य तदा कार्त्स्न्येन ।

ननु समवाय्यसमवायिनिमित्तजन्यं सर्वं कार्यमारम्भवादे, परिणाम-विवर्तयोः पुनरुपादाननिमित्तजन्यम् तत् कथमेकस्य पौष्कल्यम् ?

उच्यते—निमित्तकारणविषयमेतत् पौष्कल्याभिधानं नोपादानविषयम्, फलोपादानस्यात्मनः प्रसिद्धत्वेन शास्त्रानपेक्षणात् । उक्तं हि भाष्यकृद्भिः "जानात्येवासौ मयैतत् कर्तव्यमिति, उपायन्तु न वेद तस्योपायः कथनीयः" इति ।

ननु निमित्तकारणस्यापि कथमेकस्य पौष्कल्यम् ? न हि निमित्त-कारणमात्रात् किंचित् कार्यं सिध्यति ।

तदयुक्तम्, आलोकसंयोगमात्रादन्धकारनिवृत्तेर्दर्शनात् ।

ननु यदि पौष्कल्यमेव नैरपेक्ष्यम्, कथं तर्हि व्रीहियवयोः ?

उच्यते—तत्र कारणत्वस्यैव प्रत्येकं परिसमाप्तत्वात् । अन्योन्य-निरपेक्षत्वमेव न सर्वनैरपेक्ष्यमितिकर्तव्यतासाकाङ्क्षत्वात् । पौष्कल्यं तु स्वव्यतिरिक्तसर्वनैरपेक्ष्यम् । अतश्च केवलया भक्त्येत्ययमर्थः—मधुभिद-भिधानमेव मनागुद्दीर्यमाणमशेषपापप्रध्वंसस्य पुष्कलं कारणं तरणिरिव गगनाङ्गनमवतीर्णस्तिमिरपटलपाटनस्य । तच्च पौष्कल्यं कारणत्वस्य विशेषणं न भक्तेः, भक्तेः कैवल्ये कारणत्वे च विधेये वाक्यभेदो मा प्रसाङ्क्षीदिति ।

ननु भक्तेरेव विशेषणं कैवल्यम्, केवलया भक्त्येति भक्तिसामानाधि-करण्यात् ?

मैवं, कारणत्वविशेषणत्वेऽपि तत्सामानाधिकरण्योपपत्तेः तन्तुभिरु-पादानैः पटं—कुविन्दः करोतीतिवत् । तत्र हि कारणं विशिंषदुपादान-त्वं तद्द्वारेण तन्तूनपि विशिनष्टि, तथेहापि, अन्यथा कैवल्यस्य भक्ति-विशेषणत्वे वाजपेयोक्तो वैरूप्यदोषोऽपि प्रसज्येत, तत्र हि वाजपेयशब्द-स्यान्नादिद्रव्यवचनत्वे करणभूतं द्रव्यं प्रति यजत्यर्थस्य प्राधान्यात् फला-

पूर्वं प्रति च गुणभावात् प्रधानत्वगुणत्वोद्देश्यत्वविधेयत्वज्ञातत्वाज्ञातत्वानि परस्परविरुद्धान्येकस्या प्रतीतावेकस्यैव प्रसज्येरन्निति नामधेयत्वमेव तस्य समर्थितम् तथेहापि केवलया भक्त्येति कैवल्यगुणयुक्ताया भक्तेः फलसाधनत्वे विवक्षिते तस्याः कैवल्यं प्रति प्राधान्यात् फल प्रति च गुणभावाद्विरुद्धत्रिकद्वयापत्तिरनिवार्यैव; तस्मात्कारणविशेषणमेव पौष्कल्यम् ।

ननु तृतीयया साधकतमत्वमभिधीयते, तमबर्थश्च सातिशयः, स चापेक्षिकः, अपेक्षा च नासति साधकान्तरेऽवकल्पते, केवलप्रातिपदिकेन च पौष्कल्यमभिधीयत इति परस्परव्याहतमेतत् ।

तदयुक्तम्. अतिशयोऽप्यत्र कार्यसन्निकर्षोऽभिप्रेतः, स च नापेक्षिक एव, अपि त्वनापेक्षिकोऽपि; तदाहुर्वार्तिककारमिश्राः—

यद्वेन्द्रियं प्रमाणं स्यात् तस्य चार्थेन संगतिः ।
मनसो वेन्द्रियैर्योग आत्मना सर्व एव वा ।।

इति । अत्र चात्मन इन्द्रियार्थपर्यन्तानामापेक्षिकं साधकतमत्वम्, सर्व एव वेत्यत्र त्वनापेक्षिकम्, अवधिभूतस्य साधनान्तरस्याभावात् । तत्राप्यापेक्षिकत्वे कथंचिद्विप्रकर्षस्यापि सम्भवाद् अनापेक्षिक एव मुख्यः सन्निकर्षः स एव चौत्सर्गिकस्तृतीयार्थः, साधनान्तरेषु तु प्रमाणान्तरैरुपस्थापितेषु तद्बलादापेक्षिकोऽपि स्वीक्रियते । अत इह कार्यप्रत्यासन्नत्वमनापेक्षिकमेव मुक्तप्रग्रहया तृतीययाऽभिधीयते; ततश्च सिद्धमेव पौष्कल्यं स्पष्टार्थमनूद्यते केवलयेति न व्याघातः ।

न चैकहायन्यादिभिरन्वितः सोमक्रय इव भक्त्या कैवल्येन चान्वितमंहोविधूननमेव प्रतीयते, परस्परान्वयस्तु तयोः पार्ष्ठिक इति वक्तव्यम्; अघधूननस्य फलस्योद्दिश्यमानत्वेन विधेयत्वानुपपत्तेः, तस्मादस्मदुक्तैव वाचोयुक्तिर्वरीयसी । तस्मान्निरपेक्षमेव भगवन्नामकीर्तनं पापक्षयहेतुर्नान्याङ्गभूतं न चान्यसमुच्चितमिति ।

## नामकीर्त्तनस्यान्यकर्माङ्गत्वनिरासः

यत्तूक्तं पुराणवचनैरेवाङ्गत्वमवगम्यत इति, तदयुक्तम्, प्रायश्चित्तानि चीर्णानीत्यस्यायमर्थः—प्रायश्चित्तानि न निष्पुनन्ति न सम्यक् पुनन्तीति सम्यक्त्वञ्चात्र वासनापरिक्षयः, स च न कर्मसाध्यः, तानि हि नारायणपराङ्मुखमधिकुर्वन्ति तस्य च कथं वासनाविध्वंसं विदध्युः ? तस्य भक्तिज्ञानैकसाध्यत्वात् । यस्तु नारायणप्रवणः स कर्मात्मकेषु प्रायश्चित्तेषु न प्रवर्तत एव । एवं च पापक्षयं कुर्वतामेव प्रायश्चित्तानां तद्वासनाक्षयहेतुत्व निवार्यते ।

न चैवं सति मन्वादिवचनविरोधो न वा विशेषणानर्थक्यम्, हेतुत्वेनोपयोगात्, इदमेव च स्पष्टीकृतं कर्मणा कर्मनिर्हार इति, न हि तस्य कर्मणा कर्मनिर्हारो नास्तीत्यर्थः, अपि तु नात्यन्तिक इति, आत्यन्तिकत्वञ्च सह वासनाभिः परिक्षय इति । अविद्वदधिकारत्वादिति हेतुत्वमेव प्रकटयति, अधिक्रियतेऽस्मिन् पुरुष इत्यधिकारः, अविदुषोऽधिकारोऽविद्वदधिकारस्तस्य भावस्तस्मात्, भगवत्पराङ्मुखविषयत्वात्प्रायश्चित्तानामित्यर्थः । विमर्शनमिति च ब्रह्मविद्या दृष्टान्तत्वेनानूद्यते न विधीयते, भक्तेरेव प्राकरणिकत्वात् । तथा—

क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः ।
प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत् ॥

इति सतीषु पापवासनासु पापप्रवृत्तेरवश्यंभावात् 'प्रायश्चित्तमनर्थकम्' इति ब्रुवतेदमेवोपजीव्यते ।

## नामकीर्त्तनात् सवासनानां पापानां ध्वंसः

तथा—

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥

इत्येतदपि संवादकम् ।

यस्मिन् यस्मिन्निमित्ते यद्यत्प्रायश्चित्तं विहितं तपोदानव्रतादि च तैः प्रायश्चित्तैस्तान्यघान्येव पूयन्ते नश्यन्ति, न पुनरधर्मजम् अधर्मेभ्यो जातम्, अन्येषु ग्रहणाड्ड: ततश्च तत्तत्संस्कारविशिष्टतयोत्पन्नं हृदयम्, ईशाङ्घ्रिसेवया तु तदपि पूयते, अपिशब्दान्न केवलमघानि नश्यन्ति, अपि तु तत्संस्कारा अपीति । ईशाङ्घ्रिसेवा चात्र न चतुर्थी पादसेवनलक्षणा भक्तिर्विवक्ष्यते, किं तर्हि ? कीर्तनलक्षणा तदधिकारत्वात्, तथा हि सेवाभजनंभक्तिरिति पर्यायाः ।

## नवधा भक्तिः

सा चात्र—

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।

इति नवधा भिद्यते, सा च प्रत्येकं कृत्स्नपापक्षयहेतुः, तत्तन्माहात्म्यप्रतिपादकवचनानां पुराणेषु भूयस्त्वात् । इह तु कीर्तनस्यैव सेतिहासमाप्रकरणपरिसमाप्तेः, प्रतिपादनात् कीर्तनलक्षणोपादीयते ।

अथ वा सर्वप्रकारापि भक्तिरत्र प्रकरणिनी, केवलया भक्त्येत्यविशेषेण प्रक्रमात्, कीर्तनवदन्येषामपि शृङ्गग्राहिकया पापक्षयहेतुत्वप्रतिपादनाच्च । तत्र—

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ।।

इति स्मरणस्य, तदपीशाङ्घ्रिसेवयेति पादसेवनस्य यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवयेत्यात्मनिवेदनस्य भगवज्जनसेवायाश्च, तस्या अपि मुख्यभगवद्भक्तित्वात्, सर्वपुराणेषु पुनः पुनरत्यादरेण मद्भक्तजनवात्सल्यमित्यादिभिर्विधीयमानत्वात् ।

जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ।।

इति तु यमवाक्य नवविधाया अपि, तथा हि यदिति व्यस्तमव्ययम्, अन्यथा यच्छिर इति समासे जिह्वाचेतःशब्दाभ्यां सम्बध्यमानस्य यच्छब्दस्यादः सापेक्षत्वेनासामर्थ्यप्रसङ्गाद्, विष्णुकृत्यमिति च कीर्तनस्मरणवन्दनेभ्योऽवशिष्टं श्रवणादिषट्कं गृह्यते गोबलीवर्दन्यायेन। न कृतं विष्णुकृत्यं यैस्तेऽकृतविष्णुकृत्यास्तानानयध्वमिति नवविधभक्तिहीनानामानयनप्रतिपादनेनैकैकभक्तियुक्तानामनानयनं प्रतीयते, एकाङ्गवैकल्येन प्रत्युदाहरणानियमात्। तत्रापि "वैवस्वतं संगमनं जनानाम्" इति श्रुत्यानयनस्योत्सर्गतः प्राप्तत्वाद् भक्तानामनानयनमेव विधीयते, अप्राप्तत्वात्। ततश्च नवविधाया भक्तेरेकैकत्वेन कृत्स्नपापक्षयहेतुत्वमिति भावः। श्रवणादीनां तु माहात्म्यं स्वस्वप्रकरणे विशेषतोऽवगन्तव्यम्। प्रसङ्गागतं चैतत्, प्रस्तुतं पुनरधर्मवासनानिवृत्तिहेतुत्वं भक्तेरेव नो कर्मणामिति।

## अधर्मपदार्थविवेचनम्

ननु कोऽयमधर्मो नाम? यद्वासनानां निवृत्तये न प्रभवन्ति कर्माणि। किं हननादि कर्मैव? किं वा तज्जन्यः संस्कारः? किं वान्यः? न तावत्कर्म, तस्य स्वयमेव निवृत्तत्वात् तादर्थ्येन प्रायश्चित्तविधानानुपपत्तेः, अथ संकारः, न तज्जन्यामन्यां वासनामङ्गीकुर्मः संस्कारस्य संस्कारान्तरायोगादनवस्थाप्रसङ्गात्, न वान्यः, प्रमाणाभावात्। यदाहुर्वार्तिककारमिश्राः—

तस्मात्फलप्रवृत्तस्य यागादेः शक्तिमात्रकम्।
उत्पत्तौ वापि पश्वादेरपूर्वं न ततः पृथक्॥

इति। शक्तिमात्रमिति च यागादिजन्यः संस्कार एवोच्यते, शक्तिमन्तमन्तरेण मुख्यशक्तेरवस्थानायोगात्। उत्पत्तौ वापि पश्वादेः शक्तिमात्रकमित्यपि फलस्य पूर्वावस्था, यथोक्तं निबन्धकृद्भिः "फलस्य चाङ्कुरावस्था" इति। सा च यागादिजन्यः संस्कार एव। धर्मवदेवाधर्मः, तथा चाधर्मवासनाक्षयो नाम न कश्चित्।

इदमपेशलम्, जात्यन्तरमेव धर्माधर्मौं न संस्कारजातीयौ, अभियुक्तैर्भेदेनानुक्रान्तत्वात् । तत्र च क्रियाज्ञानयोरेव संस्कार इति तार्किकाः । वयं तु सर्वेषामेव संस्कारव्यतिरिक्तानां विनश्यतां सोऽस्तीति ब्रूमः, विनश्यत्त्वेनैवानुमातुं शक्यत्वात् । श्रीविष्णुपुराणे चैतदेव स्पष्टीकृतम्—

हिंसाहिंसे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ।।

इति । तैर्हिंसादिभिर्भाविता वासितास्तान्येव प्रतिपद्यन्ते, न चात्र धर्माधर्मशब्दाभ्यां विहितप्रतिषिद्धयोः क्रिययोरुपादानं तयोः पृथगेव हिंसादिशब्दैरुपात्तत्वात् । यद्यपि मुख्यवृत्त्याग्निहोत्रहननक्रिययोरेवार्थानर्थहेतुत्वेन धर्माधर्मशब्दवाच्यत्वं तथापि यद्द्वारेण तयोरर्थानर्थहेतुत्व तदेवापूर्वं प्रायेण धर्माधर्मशब्दाभ्यां शास्त्रेषु व्यवह्रियते ।

वार्तिककाराणामपि स्वर्गयागयोरन्तराले किञ्चिदतीन्द्रियं तयोरेव साध्यसाधनसंबन्धनिर्वाहकं वस्तु श्रुतार्थापत्तिप्रमेयमपूर्वन्नाम न परपरिकल्पितं कार्यनियोगापरपर्यायशब्दैकसमधिगम्यं किञ्चिदिति मनीषितम्, न पुनः संस्कार एव । मण्डनमिश्रैरप्ययमेवार्थोऽङ्गीकृतः प्रारब्धक्रिययैव जीवन्मुक्ति समर्थयद्भिः । अथ वाग्निहोत्रहननादिक्रियाणां विहितप्रतिसिद्धत्वनिबन्धनः स्वर्गनरकहेतुरेकः संस्कारः, श्रुतार्थापत्तिप्रमेयः तासामेवान्योऽपि सजातीयोत्पत्तिहेतुः क्रियानिबन्धनोऽनुमेयः, यथा योगिशैववैष्णवशिवलिङ्गशालग्रामादिदर्शनस्य पुरुषार्थहेतुरतिशयः शास्त्रसमधिगम्यः कश्चिदस्ति, पाषण्डिचाण्डालादिदर्शनस्य पुनरनर्थहेतुः, तयोरेवानुभवनिमित्तः स्मृतिहेतुरन्योऽपि । अस्मिंश्च विभागे—

नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ।

तत्कर्मनिर्हारमभीप्सतो हरेर्गुणानुवादः खलु सत्त्वभावनः ।।

इत्येवंजातीयकं वचनजातं प्रमाणम् । तथा हि न तावत्सजातीयोत्पादकः

संस्कारो नास्त्येवेति वक्तुं शक्यते "यः सकृत्पातकं कुर्यात् कुर्यादेनस्ततोऽपरम् ।" इति श्रुतेः ।

तेषां ये यानि कर्माणि प्राक् सृष्टयां प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ।।

इत्यादिस्मृतेश्च । स्वर्गनरकसृष्टाविव पुण्यपापसृष्टावप्यविषमस्य कृपालोः परमेश्वरस्य प्राचीनपुण्यपापसापेक्षत्वाच्च । परमसिद्धान्तेऽप्यनपाकृत्यव सापेक्षत्वं सृष्टेर्मायामयत्वेन वैषम्यदोषसमाधानाच्च । यदि पर स्वर्गनरकहेतुरेव सजातीयोत्पादकोऽपीति वक्तव्यम् तथा च सति—

विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ।।

इत्यादिना वेदाभ्यासजपोपासनादिस्वाध्यायैः शुद्धेरनात्यन्तिकत्वाभिधानं नावकल्पते, निरंशस्य संस्कारस्य सान्वयविनाशायोगात्, तस्मात्स्वर्गनरकहेतुः सजातीयोत्पत्तिहेतुश्चेति संस्कारद्वय कर्मणामवश्यमभ्युपमन्तव्यम् ।

## भक्तेरेवात्यन्तिकशुद्धिकरत्वम्

ततश्च नरकहेतुः संस्कारः प्रायश्चित्तैर्निवर्त्यते न सजातीयोत्पादकः, भक्त्या पुनरुभयविधोऽपीति भक्तेरेवात्यन्तिकशुद्धिहेतुत्वं न कर्मणामिति, अतश्च प्रायश्चित्तानि चीर्णानीत्येतदप्यनात्यन्तिकतया कर्मात्मकानि प्रायश्चित्तानि विनिन्द्य प्रकरणिनीमत्यन्तपावनीं भगवद्भक्तिमेव प्रशंसति ।

यत्पुनः सर्वकर्मवादगुण्यार्थत्वमिति, तदविरुद्धम्, दध्यादिवदुभयार्थत्वोपपत्तेः, यथा दध्नाजुहोति दध्नेन्द्रियकामस्य जुहोतीत्यादिशास्त्रात् क्रत्वर्थत्वं पुरुषार्थत्वं च दध्यादिस्वरूपस्य; तथेहापि । "वासुदेवे मनो यस्य" इति तु गुणफलाधिकारः, फलश्रवणात् । न च पर्णमयीत्वादिवत् फलश्रुतेरर्थवादत्वम्, स्मरणस्य भावार्थत्वेन स्वतः फलसाधनतोपपत्तेः, पर्णतादैषम्यात् ।

## सिद्धान्तोपसंहार

तस्मादन्याङ्गत्वे प्रमाणाभावात् स्वातन्त्र्येण च सर्वपुराणानां गतिसामान्यात् स्वप्रधानमेव भगवत्कीर्तनं कृत्स्नपापक्षयहेतुरिति स्थितम् ।

श्रीरामेति जनार्दनेति जगतां नाथेति नारायणे-
त्यानन्देति दयापरेति कमलाकान्तेति कृष्णेति च ।
श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहु-
र्मुह्यन्तं गलदश्रुनेत्रमवशं मां नाथ नित्यं कुरु ।। १ ।।

कृष्ण कृष्ण मधुसूदन विष्णो कैटभान्तक मुकुन्द मुरारे ।
पद्मनाम नरसिंह हरे श्री राम राम रघुनन्दन पाहि ।।२।।

इति श्रीमदनन्तानन्दचार्य पादपद्मोपजीविनो लक्ष्मीधरस्य कृतौ
श्रीभगवन्नामकौमुद्यां नामकीर्तनस्य पुरुषार्थत्व प्रतिपादनं नाम
**द्वितीयः परिच्छेदः ।। २ ।।**



श्रीमते रामानन्दाय नमः

# ※ श्रीभगवन्नामकौमुदी ※

## तृतीयः परिच्छेदः

यस्य नामान्यधीयानैः शुकैरपि शुकायितम् ।
विनेयैर्बल्लवस्त्रीणां स कृष्णः कुरुतात् कृपाम् ॥

### पूर्वपक्षः—विकल्पव्यवस्थयोर्व्यवस्थाया ज्यायस्त्वम्

एवं भक्तिकर्मणोः संभूय साधनत्वे निरस्ते पुनरिदं विचार्यते—किमनयोर्व्यवस्था विकल्पो वेति ? तत्राधिकारिभेदेन व्यवस्थायामधिकारिविशेषणस्य किञ्चित्करत्वाच्छ्रद्धादिसहकृतस्यैव कीर्तनस्य पावनत्वं फलिष्यति, विकल्पे तु तन्निरपेक्षस्यैव, तत्र गुरुलघुनोर्विकल्पे गुरुणो ह्यत्यन्तबाधप्रसङ्गाद् व्यवस्थैव साध्वीयसी ।

ननु नामकीर्त्तनविषयं शास्त्रं न द्वादशवार्षिकादेः साधनत्वमपलपति तत्कथं बाधः ?

उच्यते—अननुष्ठानमेवात्र बाधितत्वम् न विषयापहारः । यथोक्तं भट्टैः "एतेन प्रवृत्तिश्च फलं प्रमाणानां प्रवृत्त्याख्यफलापहारश्च बाधः" इति । तत्र यदा समशिष्टयोर्द्वयोरपि नोपलभ्यते विशेषः, तदा निरकुंशत्वादिच्छायाः कस्यचित्कदाचित्कस्मिंश्चित्प्रवृत्तिरिति द्वयोरपि पाक्षिकमनुष्ठानम्, यदा पुनरुपलभ्यते विशेषः सुकरदुष्करत्वभेदेन तदा सुकरानुरागिणीमिच्छां

न कश्चिदपि कदाचिदप्यपाकृष्टमीष्ट इति दुष्करस्यात्यन्तबाध एव तस्माद् व्यवस्थैव वरीयसी ।

## तत्र महदल्पादिपापभेदेन व्यवस्था

तत्र केचिन्नितान्तमनुरक्ताः स्मृतिषु पुराणेभ्यश्च मनाग्विभ्यतो महदल्पपापभेदेन वा ज्ञाताज्ञातकृतभेदेन वा प्रकाशरहस्यभेदेन वा स्मार्त्तं पौराणञ्च प्रायश्चित्तं व्यवस्थापनीयमिति वदन्ति, ततश्चाल्पाज्ञानादिकृतविषये स्मार्त्ते विकल्प्यते पौराणमित्युक्तं भवति ।

## उक्तव्यवस्थायाः खण्डनम्

तत्र साधीयः—

पापे गुरूणि गुरुणि स्वल्पान्यल्पे च तद्विदः ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः ।।
प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ।।

इति गुरुलघुसर्वपापानामविशेषेण कृष्णानुस्मरणस्य मुख्यप्रायश्चित्तत्वाभिधानात् ।

## अवान्तरपूर्वपक्षः—कीर्तनस्य महापातकाद्यनिवर्तकत्वम्

ननु को नाम न ब्रूते कृष्णानुस्मरणं महापातकादिप्रकीर्णान्तसर्वाघसंहरणमिति, सा हि ब्रह्मविद्या, तथा हि कृषति विलिखति विदारयति संसाराटवीमिति वा कर्षति—आकर्षति—आत्मसात्करोति वाज्ञानमिति वा कृष्णः परमात्मा, सदानन्दरूपो वा

कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ।।

इति च स्मृतेः । तस्य चायमर्थः—भवनं भूः सत्ता तद्वाचको भूवा-

चकः न तु पृथिवीवाचक इति, निर्वृत्तिवचनेन णकारेणानन्वयात्, पृथिवीवर्तिनां जीवानामानन्दो यस्मादिति विग्रहे लक्षणाप्रसङ्गात्, आस्थावरमाचतुराननञ्च सर्वेषां जीवानामानन्दयितरि स्वसमयपरिपच्यमाननानापुण्योपसादितविविधविषयसन्निधिसंसृज्यमानमनोमुकुरमण्डलान्तरभिव्यज्यमानतया तत्तदानन्दतयोपश्लीयमाने परमात्मनि पृथिवीगतानन्दत्वस्य तद्हेतुत्वस्य चाविवक्षितत्वात्, विवक्षितत्वे वा "ये वामुष्मात्पराञ्च लोकास्तेषां चेष्टे देवकामानां च" इत्यादिशास्त्रविरोधात्। तस्मान्निरवद्यस्य सर्वेषामात्मभूतस्य सदानन्दस्यानुस्मरणं पुनः पुनश्चिन्तन सजातीयप्रत्ययावृत्तिलक्षण विजातीयप्रत्ययनिरोधलक्षणं वा निदिध्यासनमिहोपादीयते। तस्य चात्मसतत्त्वसाक्षात्कारकारणभूतं श्रवणं प्रति फलोपकार्य्यङ्गभूतस्यासम्भावनानिरासवत् तत्प्रतिबन्धकपातकप्रध्वंसोऽपि द्वारकार्य्यं भवत्येव;

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।

इति स्मरणात्, कीर्तनस्य महापातकादिनिवर्तकत्वेनेदं प्रमाणम्।

## मध्यमपक्षः—अनन्तरोक्तपूर्वपक्षखण्डनमुक्तव्यवस्थानिरासश्च

इदमसुन्दरम्, कृष्णशब्दस्य तमालश्यामलत्विषि यशोदास्तनन्धये ब्रह्मणि रूढत्वात् रूढिर्योगमपहरतीति न्यायात्। यौगिकत्वे वा दुर्वारमदनमहाग्रहगृहीततया समुल्लङ्घितसकलसेतूनां गोकुलकामिनीनाम्, अतिविषमरोषावेशविवशविश्रृङ्खलसकलकरणवृत्तीनां पूतनाप्रभृतीनामरातीनाम् अत्यन्तपराचीनचेतसां यमुनावनपशुपक्षिसरीसृपाणाम्, अतिबहलमोहपटलीपिनद्धसर्वेन्द्रियाणां वृन्दावनतरुगुल्मलतावीरुधामपि मुक्तिसुखमनिवारित वितरतो नित्यनिरस्तनीहारतया निरन्तरस्वमहिमसमुल्लसदनन्तानन्दस्य गोपालशिरोमणेः सर्वप्रकारोऽपि योगोऽस्यैवेति तस्यैवेह ग्रहणं न निर्गुणस्य ब्रह्मणः, प्रयोगप्राचुर्य्यात्तत्रैव प्रथमतरप्रतीतेरुदयात्। तस्य चानुस्मरणं कीर्तनमेव न ध्यानम्, वाक्यशेषे कीर्तनस्यैव प्रशंसनात्,

क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ।।

इति । न चान्यद्विधीयतेऽन्यत्प्रशस्यत इति सङ्कच्छ्यते । अपि च प्रतीचीनमात्मवस्तु न कदाचिदपि स्मरणाङ्गनमवतरति, प्रतीचीनत्वस्यैव व्याघातात्, अतस्तस्य नाम्ना रूपेण वा तदुभयनिरासेन वोपाधिना तद्विषयत्वं वक्तव्यम्, तत्र नामोपाधिक स्मरणमिह गृह्यते तच्च कीर्तनमेव । स्मरणशब्देन च कीर्तनमुपाददानस्य मानसमपि भगवन्नाम्नोऽनुसंधानं सर्वाघसंहारि, न केवलं वाचिकमिति विवक्षितम्, पुराणान्तरे च समानप्रकरणे नानाविधनरकयातनाकन्दकुद्दालस्य कीर्तनस्यैव वर्णितत्वात् ।

इहाप्यस्मिन् प्रकरणे सङ्कीर्तनमेवोपादीयते, न ध्यानम्, तस्य च गुरुलघुभेदानादरेण सर्वाघसंहारहेतुत्वेनावधारितत्वान्न महदल्पपापभेदेन व्यवस्थापनं गरीयः । अत एव न ज्ञानाज्ञानप्रकाशरहस्यभेदावपि व्यवस्थापकौ, स्वरूपेण वा गरिमलघिमानौ स्यातां निमित्तान्तरेण वा, गरिमलघिमानावेव तौ' कस्तत्र विशेषः? गुरुलघुनोश्चांहसोरविशेषेण निवर्तकं भगवत्कीर्तनमित्यभ्यधायि, तत्कथं तद्भेदेन व्यवस्थेति ?

### कैमुत्यन्यायेनोक्तव्यवस्थायाः खण्डनम्

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ।।

इत्यनेनापि व्यवस्था न प्रतीयते, कथम् ? अल्पपापनिवर्तकत्वे कीर्तनस्य न चित्रबुद्धिः, किन्तु नितान्तमहीयसामप्यंहसां कीर्तनमात्रान्निवृत्तिरित्युच्यमाने कस्यचिदनवगतभगवन्नाममहिम्नः पुंसश्चित्रबुद्धिरुत्पद्यते, सा निवर्त्यते कैमुत्यन्यायेन । तथा हि—यस्मिन्न्यस्तमतिः, यच्चिन्तने, यत्र

निवेशितात्मनसः, चेतसि यः स्थित इति च स्मरणमेव शब्दभेदेन प्रतिवाक्यमलङ्कारार्थमावर्त्यते—

विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।

इतिवत् । उत्तरोत्तरभूमिकागतस्तु विशेषो विद्यमानोऽपि न विवक्ष्यते कैमुत्यानुपयोगात् । नरकशब्देन तु नाधर्मफलस्य ग्रहणम्, तन्निवृत्तेः कैमुत्येन सिषाधयिषितत्वात् । ततश्चायमर्थः- यस्मिन्नच्युते निविष्टबुद्धिर्नरकं नराणां कं सुख मानुपमानन्दं सार्वभौमत्वादिकम् अन्तरायत्वेनापि न प्राप्नोत्येव, यदि कथञ्चिदसावमरपुरीपारमैश्वर्य्यमधिगच्छति तर्हि स विघ्नः, द्विपरार्द्धस्थायी हैरण्यगर्भोऽपि लोकोऽल्पकः, मुरमथनचरणस्मरणस्यातिविसदृशं फलम्, सार्वभौमसेवाया इव स्वोदरम्भरित्वम्, किं तर्हि ? तेषां स्मरतां पुंसां मुक्तिं सकार्य्याविद्याविध्वंसद्वारेण निरतिशयानन्दे निजमहिमन्यवस्थानमेव ददाति भगवान् । अमलधियो हि ते, न हि तेषां समलधियामिवान्येषां देशकालावच्छिन्नं फलमुचितम्, इदमेवामलत्वं धियो यदुत पुरुषोत्तमपादपल्लवप्रवणत्वम् विषयद्वारेणैव हि समलत्वममलत्व न धियः ततश्चयेषां धीर्भुवनत्रितयान्तरे वर्तमानं यं कञ्चिदभरमन्यमवलम्बते तेषामुचितान्येव साम्राज्यादीनि, येषां पुनर्भुवनत्रितयातीर्णभक्तानुगृहीतमूर्त्तिमुत्तमश्लोकशिखामणिमवलम्बते, तेषां तु विविध परिच्छेदविरहिणी मुक्तिरेवोचिता, न तु परिच्छिन्नान्यन्यानि फलानीति ।

इह दातृदानसंप्रदानभाव औपचारिकत्वान्न षष्ठीपर्य्यनुयोगः । मुक्तिमपि न कतिपयानां वितीर्य्य विरमति मुरभिदितरदानिवत्, अपि तु येषां मनसि स्थितः तेषां सर्वेषामेवेति बहुव्रीहौ सिद्धस्य सर्वनाम्नो विवक्षा । अपि च, अन्येषां दातॄणां यद्यर्थिनां मनसि स्थिताः तर्हि तेभ्योऽर्थं वितरन्ति, अयं पुनरर्थिनामेव मनसि स्थितो मुक्तिं ददाति अन्यच्च, अन्ये दातारो वनीयकेभ्यो धनं विभज्य वितरन्तो वियन्ति, अयं पुनरव्ययः प्रतिवनीयकं सर्वस्वं वितरन्नपि न व्येति । य एवं मनोमात्रेणाप्यभिमुखानां सर्वाननर्था-

नपनयति निरतिशयं चार्थमुपनयति, तस्मिन्बहिरन्तःकरणद्वयीं वाङ्मनसलक्षणां प्रणिदधानानामनर्थैकदेशपरिहारमात्रं किं चित्रम् ? नैव चित्रमिति, ततश्च ज्ञानकृतप्रकाशमहापातकपरिहारोऽपि मनसः क्षतिमेवावहति न पुनः पूर्तिम्, तत्कथं तत्रापि सङ्कोचेन व्यवस्थाशङ्केति ।

## युक्त्यन्तरेणोक्तव्यवस्थानिरासः

एवञ्च --

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ।।

इत्येतदप्यनुसृतं भवति । वर्णितव्यवस्थायां तु प्रकीर्णकविषयत्वे पातकशब्दो बाध्येत, अतिपातकादिविषयत्वे सर्वशब्दः, न च पातकशब्दस्येव सर्वशब्दस्यापि विशेषान्तरे पर्य्यवसानम् प्रयोगवैफल्यात् पातकशब्देनैव तत्सिद्धेः, अस्मत्पक्षे तु पातकशब्देनैव सर्वपातकग्रहणेऽपि न्यायाभासपरिकल्पितव्यवस्थाबाधेन सफलः सर्वशब्दः, तस्मान्नैव व्यवस्था ।

श्रीमद्भागवते तु शृङ्गग्राहिकयैव महापातकान्यनुक्रम्य सङ्कीर्तनेनैव तन्निवृत्तिरभिहिता—

स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ।।

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ।।

इति । न च तदज्ञानकृतविषय रहस्यविषयं वेति वक्तव्यम्, बुद्धिपूर्वमखिलजगत्प्रख्यातं पातकं कृतवतोऽजामिलस्यापि नामकीर्तनादेव तन्निवृत्तेर्दर्शनात् । न च तदप्युपपातकादिविषयमिति वक्तव्यम्, तस्मिन्महापातकानामप्यनुक्रान्तत्वात्, "यतस्ततोऽप्युपानिन्ये न्यायतोऽन्यायतो धनम्" इत्यादिना ।

श्रीविष्णुधर्मे च बुद्धिपूर्वप्रकाशमहापातकिनः क्षत्रबन्धोरपि नामकीर्तनमात्रात् परमपूतत्वप्रतिपादनान्नेयं व्यवस्था न्यायविदां हृदयमधिरोहति ।

## मतान्तरव्यवस्था—श्रद्धाभक्तिमतः श्रवणकीर्तनादिष्वधिकारः, तदितरस्य तु स्मार्ते कर्मणि

तस्मादन्यथा व्यवस्थाप्यते— तद्यथा, यस्य पुराणेषु मातृवचनेष्विव न कदाचिदिमान्यपथ्यमतथ्यं वाभिदधति, अपि तु पथ्यमेव तथ्यमेवेति दृढतरश्रद्धानुबद्धा, भगवति च भक्तजनमनःसरोजिनीजीवितेश्वरे नमदमरमण्डलमौलिमालामाणिक्यशलाकालिखितनिजविजयवर्णनावर्णश्रेणीसनाथपादपीठे पुरभिदि मुरभिदि वा भक्तिभरगरिमगर्भिणी स्तम्भस्वेदरोमोद्गमादिसात्त्विकभावसहचरी चित्तवृत्तिः, सापि न गतानुगतिकत्वेन, अपि तु तदीयमहिममहार्णवावगाहनेन, तस्य पौराणानां श्रवणकीर्तनादीनामन्यतमं गुरुलघुविशेषानादरेण सर्वेषामेव निरङ्कुशमंहसां परमं प्रक्षालनम्, इतरस्य पुनः प्रतिपदोक्तं स्मार्तमिति ।

## श्रद्धावतोऽधिकारे प्रमाणदर्शनम् ।

तत्र श्रद्धावतोऽधिकारे नारदीयवचनं प्रमाणम्—
यस्य यावांश्च विश्वसस्तस्य सिद्धिश्च तावती । इति,

श्रीमद्भागवते च—

यदृच्छया मत्कथादौ जातश्रद्धश्च यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥

इति,

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

इति च पुराणेषु श्रद्धावतां भक्तियोगाधिकारं दर्शयति, निवर्तयति तु

कर्माधिकारम् । श्रीमद्भगवद्गीतासु—

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।।

इति श्रद्धाहीनस्य सर्वत्रानधिकारं दर्शयति । शिवधर्मोत्तरेऽपि—

विधिवाक्यमिदं शैवं नार्थवाद शिवात्मकः ।
लोकानुग्रहकर्ता य. स मृषार्थं कथं वदेत् ।।

इति गुणवादनिराकरणेन शिवशासनेषु श्रद्धामुत्पादयन् श्रद्धावतोऽधिकारं दर्शयति । श्रुतिरपि कर्मकाण्डे ज्ञानकाण्डे च श्रद्धावत एवाधिकारं दशयति, तत्र कर्मकाण्डे "श्रद्धयाग्निः समिद्ध्यते श्रद्धया हूयते हविः" इत्यादिका । ज्ञानकाण्डे "श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्" इत्यादिका तस्मात्सर्वत्र श्रद्धावत एवाधिकारः ।

सा च पुरुषभेदेन विषयभेदेषु व्यवतिष्ठते, तस्माद् व्यवस्थितोऽधिकार इति । युक्तश्चैतत् विधिपुरुषसम्बन्धो वा तद्धेतुर्वा व्युत्पत्तिभेदेनाधिकारशब्दार्थ इति न्यायविदां स्थितिः । तत्र श्रेयः साधनलक्षणस्य विधेः स्वसाध्यभोग्यश्रेयोद्वारेण भोक्त्रा पुरुषेण सम्बन्धो विधिपुरुषसम्बन्धः, तद्धेतुर्जीवनकामनादि । नियोगवादिनस्तु नियोज्यनियोगयोर्बोद्धृबोद्धव्यलक्षणः सम्बन्धो विधिपुरुषसम्बन्धः, स च कर्मण्यैश्वर्य्यमित्येवलक्षणादधिकारादन्य एवेति मन्यन्ते । स सर्वोऽपि न श्रद्धामन्तरेण सम्भवति, अनवगताप्तभावस्य पुंसो वाक्याद्विशिष्टप्रवर्त्तकविषयाद् वस्तुवृत्त्या विसंवादशून्यादपि ममेदमिष्टसाधनमिति वा ममेदं कार्यमिति वा प्रतिपत्तेः प्रवृत्तेश्चादर्शनात् ।

ननु यस्य वेदस्तन्मूलं च स्मृतिपुराणादि सर्वं शास्त्रं प्रमाणमितिनिर्णिक्तशङ्कापङ्कबुद्धिरस्ति स एव शास्त्रेऽधिक्रियते । तत्र यदि कथञ्चिदेकदेशेऽप्यश्रद्धा तत्कथमेकदेशान्तरेऽप्यधिकारः ? अपि च नैकदेशविषयिणी श्रद्धैव सम्भविनी । सा हि शास्त्रस्य प्रमाणान्तरसंवादनिबन्धना वा? स्वतः-

प्रामाण्यनिबन्धना वा? न तावदाद्यः, प्रामाणान्तरैर्दुरवगाहत्वादतिगहनस्य धर्मतत्त्वस्य। नापि द्वितीयः, स्वत प्रामाण्यस्यैकदेशान्तरेऽप्यविशेषात्। तन्निबन्धना चेदभविष्यत् सर्वत्रापि श्रद्धा, न वा कुत्रचित्। तत् कथ तन्निबन्धना व्यवस्थेति ?

इदमसाम्प्रतम्, धर्मब्रह्मविषयशास्त्रयोः प्रामाण्यस्याविशिष्टत्वेऽपि श्रद्धाया व्यवस्थितत्वात्। यो ह्यकर्तारमात्मानमवगमयन्तीरुपनिषदोऽपि न श्रद्धत्ते स एव कर्मविधीनाद्रियते, अत एव हि तस्यैव तत्राधिकारो नेतरस्य। अन्यथा हि सर्वस्यापि सर्वत्राधिकारोऽभविष्यत् न च तथास्ति। एवमिहापि वक्तृदोषविरहादेकतुलारूढेषु समानगरिमसूत्सर्गसिद्धापि श्रद्धा कुत्रचित् कुतश्चित् प्रतिबन्धकाददृष्टादुदाहरणाभासधर्शनाच्चार्थान्तरपरत्वशङ्काकलङ्केन कुण्ठीक्रियते, तदुपपन्नं तन्निबन्धना व्यवस्थेति।

## भक्तिमतोऽधिकारे प्रमाणप्रदर्शनम्

भक्तेरप्यधिकारिविशेषणत्वं पुराणवचनैरेवावगम्यते। श्रीविष्णुपुरा- पुराणेवोक्त्—

यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावकः॥

इति। अत्र च भक्तिशब्देन भगवदालम्बनो रत्याख्य स्थायी भावोऽभीधीयते, न भजनमात्रम्, तस्य कीर्तनशब्देनोपायेषूपात्तत्वात्। प्रह्लादचरिते चायमर्थः स्फुटतरमवगम्यते—

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।
तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मृतः सा मे हृदयान्मापसर्पतु॥

—इति श्लोकद्वयस्यैकवाक्यत्वात्।

नन्वन्यैव भक्तिरन्यैव च प्रीति निर्देशभेदादेव, अन्यथा हि पौनरुक्त्यं प्रसज्ज्येत, अन्यच्च नेह प्रीति प्रार्थ्यते, अपि तु 'हे माप लक्ष्मीपते ! अविवेकिनां विषयेषु या प्रीतिः सा त्वामनुस्मरतो मे हृदयात्सर्पतु गच्छतात्' इति रागनिवृत्तिः प्रार्थ्यते । तत् कथमेकवाक्यत्वमिति ?

असुभगमेतत्, यदि भक्तेरन्या प्रीतिः प्रार्थ्यते विरक्तिर्वा, तर्हि तस्या अपि भगवद्वाक्ये भक्तेरिवानुभाषणेन ग्रहणेन च भवितव्यम्, "भक्तिर्मयि तवास्त्येव भूयोऽप्येवं भविष्यति" इतिवत् 'मयि प्रीतिस्तवास्त्येव भूयोऽप्येवं भविष्यति" इति । "विषयेषु विरक्तिस्तु तवास्त्येव भूयोऽप्येवं भविष्यति' इति च तथा, न चैवमभवत् । तस्मात्पूर्वश्लोकोद्दिष्टाया भक्तेः-स्वरूपवर्णनमुत्तरश्लोकेन क्रियत इति व्याख्येयम्, तद्यथा-अनुस्मरत इति षष्ठी पञ्चमी वा पुरुषस्य हृदयस्य च विशेषणम प्रीतिशब्देन च सुख वा तदभिव्यञ्जिका वा बुद्धिवृत्तिर्गृह्यते तत्र सुखपक्षे तस्य सर्वत्रैकरूपत्वात्तदुपरागस्यैव भेदाद्विषयेष्वनुभूयमानेषु या प्रीतिर्यत्सुखमभिव्यज्यते सा त्वामनुस्मरतो मे हृदयान्मापसर्पतु नापयातु त्वदनुस्मरणेनैव तत्सुखमभिव्यज्यतामिति सुखाभिव्यञ्जक भगवदनुस्मरणं प्रार्थित भवति । वृत्तिपक्षेऽपि तथैव, तत्रापि तत्स्वरूपसमानयोगक्षेमस्यापि तद्भेदस्य विषयावच्छेदमन्तरेणानवगमादवच्छेदकविषयान् बहिर्भाव्य प्रीतेरेवोपादानेऽविवेकिनां विषयेषु सुखसाधनेषु या प्रीतिः सा त्वामनुस्मरतो मम हृदयान्नापयातु विषयानुल्लङ्घ्य त्वामेव निरतिशयसुखात्मानमालम्बतामिति यत्तच्छब्दयोः-सामानाधिकरण्यं स्फुटमेव । ततश्च पक्षद्वयेऽपि श्रीमन्मुरमथनचरणारविन्दमकरन्दमन्दाकिनीमवगाहमानस्य मनसः कोऽपि समुल्लासः स्वानन्दमाविर्भावयन् भक्तिरित्यभिहितं भवति, सा च रतिरेवेति ।

## रतिरेव भक्तिरित्यत्र प्रमाणम् , भक्तेर्गरीयस्त्वं च

श्रीमद्भागवते च—रतिरेव भक्तिरित्यवगम्यते—

देवाना गुणलिङ्गानामानुश्रविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥
अनिमित्ता भागवती भक्ति सिद्धेर्गरीयसी ।

इत्यत्र । तस्य ह्ययमर्थः—'गुणलिङ्गानां गुणमयशरीराणामानुश्रविकं श्रुतिपुराणादिगम्यं कर्म चरितं येषां ते तथोक्ताः तेषां देवानां मध्ये सत्त्व एव शुद्धसत्त्वमयमङ्गलमूर्तौ सरस्वतीतीरवासिभृगुमुख्यमुनिजनसिद्धान्त-प्रसिद्धमहिमनि श्रीवत्सलाञ्छन एकमनसः पुरुषस्य एकाग्रस्य वा मनसो या वृत्तिरनिमित्ता फलाभिसंधिशु या स्वरसत एव विषयसौन्दर्यादियत्नेनैव जायमाना न बलादापाद्यमाना सा भागवती भक्तिः, सा च सिद्धेर्ज्ञानाद् गरीयसी' इति ।

गरीयस्त्वमेव बिवृणोति—

जरयत्याशु या कोशं निगीर्णमनलो यथा ॥

इति । यथा निगीर्णमन्नपानादि जाठरो जातवेदा जरयति तथा या कोशमन्नमयादि पञ्चप्रकारमाशु नाशयति अनुभवशिरस्कत्वात्; न ज्ञानमिव तत्त्वयुक्तिभि क्रमेणैकैकमपोहति, ततश्च तस्या गरीयस्त्वे कतमः सन्देह इति, मुक्तेर्गरीयसीति वा व्याख्येयम्

सालोक्यसार्ष्टिसामीप्यसायुज्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवन जनाः ॥

इत्यादिदर्शनात् । 'जरयत्यासु या कोशम्'' इति तु स्वयमेव भक्तिरनिच्छमाणा मुक्तिं बलादबिलम्बेनापादयतीति दर्शयति । एवलक्षणश्च मनसः परिणामः कथ नु रतेरन्य स्यात् ।

अन्या व्याख्या—एकमनसः पुंसो देवानां या वृत्तिः सा भक्तिरित्यन्वयः, तत्र देवशब्यस्य नानार्थत्वादिन्द्रियग्रहणार्थमुपपद गुणलिङ्गानामिति,

शब्दादिग्रहकारणानामित्यर्थः, अनेनैव कर्मेन्द्रियाणामपि ग्रहणम्, छत्रिन्यायेन, कर्मशब्देनैव बुद्धेरपि, अन्यथा विशेषणविशेष्ययोरनन्वयप्रसङ्गात्। कर्म कर्तव्यम्, तच्च द्विविधम्—दृष्टमानुश्रविकञ्च, तत्र प्रत्यक्षादिभिः कर्तव्यत्वेनावगत दृष्टम् यस्य तु शास्त्रादवगम्यते कर्तव्यत्वं तदानुश्रविकम्। तत्र रागादिनिबन्धनप्रवृत्तिवारणार्थं विशेषणमानुश्रविककर्मणामिति, आनुश्रविकेऽपि काम्ये रागादिनिबन्धनत्वात्प्रवृत्तेस्तन्निवृत्तये विशेषणमनिमित्तेति, अनिमित्तापि कदाचिदन्यदेवतालम्बिनी वृत्तिः स्यान्न च सा भागवती भक्तिरत आह सत्त्व एवेति। शेषं पूर्ववत्। अनेनैव क्रमेण श्रीमदच्युते चित्तावतारस्य विवक्षितत्वान्न प्रातिलोम्येन विशेषणानर्थक्यं शङ्कनीयम्।

अयमत्र निष्कर्षः—रागादिदोषनिबन्धनाभ्यः प्रवृत्तिभ्यः परावृत्तानां श्रुतिपुराणवैष्णवागमविहितश्रवणादिकर्मप्रवणानामिन्द्रियाणां किञ्चिदपि फलमनभिसन्दधानानां सकलभुवनसौभाग्यसारसर्वस्वमूर्तौ मुरमर्दने परिचयप्रचयादनपेक्षितविधिः स्वरसत एव समुल्लसन्ती विषयान्तरैरव्यवच्छिद्यमाना वृत्तिर्भागवती वृत्तिर्भक्तिरिति।

## भावरूपाया मनोवृत्तेरेव मुख्यतया भक्तिशब्दार्थत्वम्

तत्र बहिरिन्द्रियाणां श्रवणादिव्यतिरेकेण वृत्त्यभावात् श्रवणादीनां चान्योन्य भिन्नजातीयत्वान्मनोवृत्तेस्तु भावलक्षणायाः सर्वत्रैकरूपत्वान्मनोवृत्तिरेव मुख्यो भक्तिशब्दार्थः, श्रवणादिषु तु तदनुविधानादेव भक्तिशब्द इति।

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते।
स्वभावगुणमार्गेण पुंसां भावो हि भिद्यते॥

इत्यनेनापि भक्तिभावयोरभेद एवावगम्यते, अन्यथा हि भक्तेर्वैविध्यं प्रतिज्ञायौत्पत्तिकसत्त्वादिगुणभेदेन भावभेदप्रतिपादनायोगात्। श्रीनरसिंहपुराणेऽपीक्ष्वाकुचरिते—

चकार मेघे तद्वर्णे बहुमानरतिं नृपः ।
पक्षपातेन तन्नाम्नि मृगे पद्मे च तादृशि ।।

इत्यादिना प्रेमातिशयस्यैव भक्तित्वं दर्शितम् । श्रीस्कन्दपुराणेऽपि—

बीभत्सिते दुर्विषये कदाचिद्यो वापि रागो भविता जनस्य ।
स चेद् भविष्यत्यपि नाम रुद्रे को नाम मुक्तो न भवेद्भवाब्धेः ।।

इत्येतदेव दर्शित भक्तिप्रक्रमात् । श्रीलिङ्गादिषु च—'स्वरनेत्राङ्ग-विक्रिया' इत्यत्रानुभावानामनुक्रान्तत्वात्तेषां च भावाङ्गभावादङ्गीभाव एव भक्तिरिति गम्यते ।

## भक्ते रसरूपत्वम्

स चायमाद्यो भावो वृत्त्यन्तरैरन्तरा निविशमानैरप्यनेकजन्मवासनावासिते चेतसि न व्यवच्छिद्यमानो विभावादिभी रसरूपतामापाद्यमानो निजस्वसंविदा निर्भरमालिङ्गितः स्वयमेवानन्दसंविदभिधानमुपचारासह दधानो भक्तिरित्यभिधीयते ।

## भक्तिरसस्यालम्बनविभावः

तस्य चालम्बनविभावोऽवज्ञाकृष्टकुसुमायुधसौन्दर्यसर्वस्वः कमलाकुचतटीपत्रभृङ्गो भगवाननन्तो वा मनागवलोकनखर्वीकृतमदनगर्वो मुग्धमृगलाञ्छनशेखरः शङ्करो वा, तावपि श्रुतिपुराणवाक्यैः कर्णाभ्यर्णमवतीर्णौ वा, अभिनयैरभिनेयप्रतिभानमागमनुसरन्तौ वा, 'मज्जन्मकर्माभिनयः' इत्येतदर्थमेवाभिनयमस्य विहितत्वात् ।

## उद्दीपनविभावाः

उद्दीपनविभावास्तु विलसदमलमरकतमणिमरीचिमञ्जरीपिञ्जरालिभ्रान्तिभूमयो निर्यन्मकरन्दबिन्दुजालजम्बालितगगनाङ्गनाः परिमलतर्पि-

तपवनातिशयस्तरुणतुलसीवनवीथयः, मुरमथनरथाङ्गलाञ्छनच्छटापरिष्वङ्गसुव्यञ्ज्यमानसौभाग्यश्रेणिश्रीमद्गोपीचन्दनविदलानि, प्रसिद्धसकलाभरणसौन्दर्यसर्वस्वचञ्चनचणा नयनाह्लादिन्यो नलिनाक्षमालाश्च, हरनयनदहनदग्धसहचरस्मरविरहशुष्कावशिष्टकतिपयकलस्य कलावतः कलामरचूर्णचय इव धवलिम्ना बहिरन्तस्तमसो तिरोदधानं मनोमुकुरमण्डलीमुज्ज्वलां विदधद्भासुरं मसितम्, सकलपुरुषार्थसंपत्सुरलताबीजश्रेणीश्रियो रुद्राक्षमालाश्च, हरिदिनहरयामिनीमहोत्सवादयश्च ।

## अनुभावा व्यभिचारिभावाश्च

अनुभावा व्यभिचारिणश्च भरतादिमुनिनिमनीषिता एव न पुनरिहाभिनवाः । सर्वेषां चैतषामुदाहरणानि श्रीमद्भागवते स्फुटतरमुपलभ्यन्ते, पुराणान्तरेषु च केषाञ्चित् ।

## आलम्बनविभावादीनामुदाहरणानि

तत्रालम्बनविभावस्य च—

स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः ।
बलिं हरद्भिश्चिरलोकपालैः किरीटकोट्यर्हितपादपीठः । इत्यादि ।

उद्दीपनविभावस्य च—

तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः । इत्यादि ।

एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥

इत्यादि । स्वरनेत्रगात्रविकाररूपाणामनुभावानां तत्रापि सात्त्विकानाम्—

क्वचिदुत्पुलकः तूष्णीं प्रेमप्रसरसम्प्लुतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥

इत्यादि । निर्वेदादीनां च व्यभिचारिणाम्—

क्व वाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद् भगवन्नाम मङ्गलम् ॥

इत्यादि । एवं शैवेऽपि—

अस्ति कश्चिदपर्य्यन्तरमणीयगुणार्णवः ।
षड्विधाघमयस्यास्य सर्वस्य जगतः पतिः ॥

आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा ।
अखण्डजगदण्डानां पिण्डीकरणपण्डितः ॥

अनन्तानन्दसंदोहमकरन्दमधुव्रतः ।
औदार्यधैर्य्यगाम्भीर्य्यमाधुर्य्यमकरालयः ॥

इत्यादीन्यालम्बनादीनामुदाहार्याणि ।

## भगवद्भक्तेरुत्साहाङ्गत्वनिरसः

एवं स्थिते यत्कैश्चिदुक्तं भक्तिरुत्साहेऽन्तर्भवतीति तल्लौकिकभक्त्यभिप्रायम्, तस्य समरार्थमेव स्वामिना स्वीकृतत्वात् । इह तु न तथा, यथोक्तं श्रीमता प्रह्लादेन—

अहं त्वकामस्त्वद्भक्तस्त्वं तु स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥

इति । तस्माद्रत्याख्यो भावो भक्तिरिति ।

## विहिताचरणं निषिद्धवर्जनं च भक्तिरिति मतस्य प्रत्याख्यानम्

ननु श्रीविष्णुपुराणे विहिताचरणं प्रतिषिद्धवर्जनं च भक्तिरित्युक्तम्—

न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ।।

इत्यादौ ।

सत्यमुक्तम्, उपलक्षणं तु तच्छाखाग्रमिव चन्द्रस्य, न स्वरूपं भक्तेः प्रकृष्टः प्रकाश इव, भावलक्षणाया भक्तेः पृथगुपादानात् ।

मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेरतीव भक्तम् ।

इत्यत्र हि सततं मनसि कृतजनार्दनमिति सम्बन्धः, सातत्यं च न भावमन्तरेणावकल्पते । 'अतीव भक्तम्' इति च स एव मुख्यो भक्त इति दर्शयति । 'सममतिरात्मसुहृद्विपक्षपक्षे' इति च सर्वात्मनि वासुदेवे भावमन्तरेण नोपपद्यते । उपपद्यते चोपलक्षणत्वम्, विधिप्रतिषेधातिक्रमो हि रागादिनिबन्धनः, न च पुरुषोत्तमप्रवणे चेतसि रागादयोऽवकाशं लभन्ते । अत एवाभाणि भगवता श्रीशुकेन—

विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः ।।

इति । लोकेऽपि भक्तसेवकयोर्भेदो दृश्यते, समानेऽपि राजसेवाकर्मणि भक्तोऽयमभक्तोऽयमिति व्यपदेशदर्शनात्, तस्माद् भाव एव भक्तिः ।

## भक्तेः कीर्तनाङ्गत्वमधिकारिविशेषणत्वं च

सा च कीर्तनाङ्गम् "यान्नामकीर्तनं भक्त्या" इति श्रुतेः न चासाविच्छया सम्पादयितुं शक्यते, अतोऽनुपादेयत्वादर्थाधिकारिविशेषणं भविष्यति फलवत् । एतदेव स्पष्टीकृतम्—

केचित्केवलया भक्त्या वासुदेवपरायणाः ।

इति । अत्र 'वासुदेवपरायणाः' इति तदेकलक्षणस्य भावस्याधिकारिविशेषणभावेनोद्देशः भक्त्येति भजनक्रिया कीर्तनादिरादीयते, केचिदिति च दुःसम्पाद्यत्वेनाधिकारिविशेषणमेव दर्शयति—

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः ॥

इति । तत्रापि 'त्यक्तान्यभावस्य' इति भावस्योद्देशः, 'भजतः' इति कीर्तनादेरुपादानम्, तस्माद् भक्तस्यैवाधिकारः ।

## ज्ञानस्याप्यधिकारहेतुत्वमुक्तव्यवस्थाया उपसंहारश्च

ज्ञानस्याप्यधिकारहेतुत्वमगवम्यते, "यतस्तद्विषया मतिः" इति 'यतो नाम्नस्तद्विषया मतिर्भवति, तस्य नाम्नो व्याहरणं पापक्षयहेतुः' इत्यतो यस्य तज्ज्ञानमस्ति स एवाधिकारीत्यर्थादुक्तं भवति । तदुत्तमश्लोकगुणोपलम्भकम्" इति ज्ञानवतो हरेर्नामपदैस्तद्वाचकैः शब्दैरुत्तमश्लोकं तद्गुणांश्चोपलभते यः स एवात्राधिकारी' इति व्यक्तमवगम्यते ज्ञानं चात्र परोक्षपदार्थमात्राविषयं न पुनरपरोक्षमौपनिषदम्, एवं च श्रद्धाभक्तिज्ञानसम्पन्नस्याधिकारिणः पौराणं प्रायश्चित्तमितरस्य तु स्मार्तमिति व्यवस्थितम्

## पुराणवचनेष्वावृत्त्यनावृत्तिविषयकं विरोधमुद्भाव्य व्यवस्थान्तरेण तत्परिहारः

ननु भवतु स्मृतिपुराणवचनानामन्योन्यविरोधे व्यवस्थेयम्, इह पुनः पुराणवचनानामेवान्योन्यविरोधो विलोक्यते -कानिचित्सकृत्कीर्तनादेव पापक्षयमभिदधति, कानिचिदावर्त्यमानादिति । तथा श्रीलैङ्गे—

ॐ नमो नीलकण्ठाय इति पुण्याक्षराष्टकम् ।
मन्त्रमाह सकृद्यस्तु पातकैः स विमुच्यते ॥

इति । श्रीमद्भागवते तु–

हरेर्गुणानुवादः खलु सत्त्वभावः । इति ।

नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् ।

इति च । कस्तत्र विरोध परिहार इति ?

उच्यते–तत्राप्यनुतप्ताननुतप्तविषयत्वेन व्यवस्था, तथा हि श्रीवैष्णवे– "कृष्णानुस्मरणं परम" इत्यविशेषेण प्राप्तामावृत्तिमनुतप्तविषयेऽपवदति

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ।।

इति । अतोऽननुतप्तविषयैव सा व्यवतिष्ठते ।

ननु नेह निर्द्धारणमावृत्तेः, इयतो वारानितीयन्त कालमिति वा, ततश्च कथमनिर्द्धारिता सा विधीयते ? नापि यावत्फलमावृत्तिरवघातादाविव, पापवत्तन्निवृत्तेरपि शास्त्रैकगम्यत्वात् ।

उच्यते–आवृत्तिश्रवणादेव पापतारतम्यादावृत्तितारतम्यं कल्प्यते, श्रूयते च तदष्टाक्षरब्रह्मविद्यायाम्–

गोमूत्रयावकाहारो ब्रह्महा मासिकैर्जपैः ।
पूयते तत एवार्वाग् महापातकिनोऽपरे ।।

इत्यादि । तस्माद्यस्य पापं कृतवतो भाराक्रान्तस्येव 'न कदाचिदितः परं पापे प्रवर्ते' इति पश्चात्तापो जायते तस्य सकृत्कीर्तन शोधनम् इतरस्य पुनरावर्त्यमानमिति ।

## श्रद्धादिमतः कीर्तनेऽधिकार इत्यत्र विरोधोद्भावनम्, प्रसंगादभ्यासगतिसामान्ययोर्निरूपण च ।

नन्वेवमपि–

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।

वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥

इत्येवमादीनां का गतिः ? परिहासानादरयोर्हि न भक्तिश्रद्धानुतापाः सम्भवन्ति, स्तोभसाङ्केत्ययोस्तु न ज्ञानमपि । आवृत्तिरपि नापेक्ष्यते—

यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्त्ति तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः ॥

इति सकृच्छब्दप्रयोगादाशुशब्दाच्च श्रद्धादयोऽप्युपेक्षिताः । अस्य ह्ययमर्थः—यदिति व्यस्तमव्ययम्, यस्य नाम द्व्यक्षरं सुखोच्चार्यम्, तदपि गिरेरित न तु हृदयेन तदर्थमवधार्य, तच्च सकृन्न बहुवारम् तदपि प्रसङ्गान्न तु श्रद्धादेः, अघम् अवधीरितमहदल्पभेदम् आशु शीघ्रमेव न तु कालान्तरव्यवधानेन हन्ति हिनस्ति, तत्रापि न नामिनश्चित्तमावर्ज्य किन्तु तत्स्वयमेव, तच्च सर्वेषां नृणां,न द्विजानामेव, किं च कियदेतद् यदुत पापक्षयहेतुरस्य नामेति, अयं हि पवित्रकीर्तिः—पराग्भावेन प्रतिपन्नः परमेश्वर एव पविर्वज्रम्, 'महद् भयं वज्रमुद्यतम्" इति श्रुतेः,

भूतानां महदादीनां यतो भिन्नदृशां भयम् ।

इति स्मृतेश्च, तस्मात् त्रायते भक्तं भेदभ्रान्तिमुन्मूल्य निरातङ्के निजमहिमन्यवस्थापयन्ती कीर्तिर्यस्य स पवित्रकीर्त्तिस्तं पवित्रकीर्त्ति ब्रह्मादीनामप्यनतिक्रमणीयशासनं शिवं परममङ्गलं भवान् द्वेष्टीति । 'अहो शिवेतर.' इति वाक्यान्तरम् । शिवेतरः पर्य्युदस्तमङ्गलः, अमङ्गल इति यावत् । अन्येऽप्यमङ्गलाः सन्ति, अयं पुनरपूर्वोऽमङ्गल इति दक्षं देवी निन्दति ।

न चैषामतत्परत्वम्, अभ्यासाद् गतिसामान्याच्च ।

अभ्यासस्तावदजामिलोपाख्याने—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।

यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ।।

इति निर्वेशो भोगः, "निर्वेशो भृतिभोगयोः" इति नैघण्टुकाः, स च प्रायश्चित्त उपचर्य्यते भोगप्रायश्चित्तयोः कर्मनाशहेतुत्वाविशेषात् अत्र विवश इति विवक्षितम्, विवशस्य तु न श्रद्धादयः सम्भवन्ति ।

एतेनैव ह्यघोनोऽस्य कृत स्यादघनिष्कृतम् ।
यदा नारायणेत्येतज्जगाद चतुरक्षरम् ।।

इति, अघोनः—अघवत, एतेनैवेति श्रद्धाविरहः, यदा जगाद तदैवेत्यनावृत्तिः, चतुरक्षरममिति च श्रद्धानपेक्षा, अक्षरसमाहारस्यैव विवक्षितत्वात्, संख्याकथनस्य चाधिकमिदमित्यभिप्रायः । एवमस्मिन् प्रकरणे भूयानभ्यासः ।

नन्वेकस्माद्वाक्याद्यावानर्थोऽवगम्यते किं तावानेवान्यस्मादपि, उताधिकः यदि तावदधिकस्तर्हि नाभ्यासस्तस्यैव तत्र विधेयत्वात तस्यैव पुनरुक्तिरभ्यास । अथ तावानेव तथापि नतरामभ्यासः, भिद्यते हि तदा वाक्यार्थ, 'एकस्यैवं पुन श्रुतिरविशेषादनर्थकं हि स्यात्' इनि न्यायेन, "आनन्दमयोऽभ्यासात्" इत्यत्र तु ब्रह्मणो दुर्भेदत्वाद् दुर्बोधत्वाच्च व्यतिरेकेणान्वयेन च पुनः पुनरुपादानं न विरुध्यते ।

असन्नेव स भवति असद् ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ।।

इति । इह तु न तथेति ।

तदयुक्तम्, इहापि विधेयस्यैकत्वेऽपि सुकरत्वेनाश्रद्धातिरस्कृतत्वात्, "नीहारमिव भास्करः" 'दहत्येधो यथानलः" 'यथा गदं वीर्यतमम्" इत्यादिभिरुदाहरणैरुपपत्तिभिश्च पुनः पुनः प्रतिपादनं न विरुध्यते, एवमभ्यासो निरवद्यः ।

गतिसामान्यं च स्कान्दोक्तेः—

अवशेनापि संकीर्त्य सकृद्यन्नाम मुच्यते ।
भयेभ्यः सर्वपापेभ्यस्तं नमाम्यहमच्युतम् ॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

इति । श्रीनारदीये च—

हरिरिति सकृदुच्चरितं दस्युच्छलेनापि यैर्मनुजैः ।
जननीमार्गं मुक्त्वा मम पदवीं निविशते मर्त्यः ॥

एवं सर्वत्र । अत एतेषु कोऽधिकारी तत्रेति ?

## उक्तविरोधपरिहारः

अत्रोच्यते—आसन्नमरणोऽधिकारी,

विक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम् ॥

इति दर्शनात्,

यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ।
तेऽनेकजन्मशमलं सहसैव हित्वा सयान्त्यपावृतमृतं तमजं प्रपद्ये ॥

इति च । श्रीनारदीये—

ब्राह्मणः श्वपचीं भुञ्जन् विशेषेण रजस्वलाम् ।
अश्नाति सुरया पक्वं मरणे हरिमुच्चरन् ॥
मुच्यते पातकात्तस्मान्नात्र कार्य्या विचारणा ॥

इति निर्धारणाच्च युक्तं च तस्मिन्नवसरे श्रद्धादिनैरपेक्ष्यं नाम्न एव सुदुर्लभत्वात् । तस्मान्न केनचित् किञ्चिद्विरुध्यत इति सर्वं सुस्थम् ।

## सिद्धान्तपक्षः-प्रागुक्तपूर्वपक्षखण्डनम्

एवं मध्यमश्रद्धानामधिकारिणां मनांसि समाधातुमुत्प्रेक्षते पन्थानमविरोधस्य । अन्य एव पुनः पन्थाः पारमार्थिकः । तथा हि—स्मृतिपुराणविरो-

धे व्यवस्थादयो नैव निविशन्ते, विषमं हि प्रामाण्यमनयोः। वेदादवगतेऽर्थे पदान्तरैरुपनिबद्धानि महर्षिवाक्यानि खलुस्मृतयः; पुराणानि पुनर्वेदा एव; श्रीमहाभारते मानवीये च—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

इति वचनात्, पूरणात्पुराणमिति व्युत्पत्तेश्च। न चात्रावेदेन वेदस्य बृंहणं संभवति, न ह्यपरिपूर्णस्य कनकवलयस्य त्रपुणा पूरणं संभवति।

ननु यदि वेदशब्दः पुराणमितिहासं चोपादत्ते तर्हि पुराणमन्यदेवान्वेषणीयम्; यदि तु न न तर्हीतिहासपुराणयोरभेदो वेदेन ।

उच्यते — विशिष्टैकार्थप्रतिपादकस्य पदकदम्बकस्यापौरुषेयत्वादभेदेऽपि स्वरक्रमभेदाद् भेदनिर्देशोऽप्युपपद्यते। अपि च साक्षादेव वेदशब्दःप्रयुक्तः पुराणेषु—

पुराणं पञ्चमो वेदः...........................।
इतिहासपुराणं च पञ्चमो वेद उच्चते।
वेदानध्यापयामास महाभारतपञ्चमान्।

इत्यादौ; अन्यथा पञ्चमत्वं च नावकल्पेत, समानजातीयनिवेशित्वात् संख्यायाः। ब्रह्मयज्ञाध्ययने च विनियोगो दृश्यतेऽमीषां यद् "ब्राह्मणानीतिहासान्पुराणानीति, सोऽपि नावेदत्वे संभवति, अत एवाह भगवान्—

कालेनाग्रहणं मत्वा पुराणस्य द्विजोत्तमाः ।
व्यासरूपमहं कृत्वा संहरामि युगे युगे ।।

इति। पूर्वसिद्धमेव पुराणं सुखग्रहणाय संकलयामीति हि तस्यार्थः। मात्स्यं कौर्ममित्यादिसमाख्यास्तु प्रवचननिबन्धनाः, न तन्निर्माणनिबन्धनाः काठकादिवत्। आनुपूर्वीनिर्माणनिबन्धना वा। अत एव श्रुतिपुराणविरोधे पुराणदौर्बल्यमानुपूर्वीभेदात्कदाचिदर्थोऽप्यन्यथा स्यादिति, स्मृतिपुराणविरोधे पुनः पुराणान्येव बलीयांसि।

एवं समुल्लङ्घितसकलशृङ्खलेषु यथास्वमेव स्वं स्वामर्थमभिदधानेसु पुराणवचनेषुमनागपि क्वचिदेकमवकाशमलभमानानां स्मृतीनां यदि नाम विषयसर्वस्वापहारः प्रसज्ज्येत, प्रसज्ज्यतां नाम; कथन्नु पुराणानामाञ्जस्यमुपमृद्य व्यवस्थापनप्रस्तावः। उक्तं हि नारदीये---

वेदार्थादधिकं मन्ये पुराणार्थं वरानने।
वेदः प्रतिष्ठितो देवि पुराणे नात्र संशयः॥
पुराणमन्यथा कृत्वा तिर्य्यग्योनिमवाप्नुयात्।
सुदान्तोऽपि सुशान्तोऽपि न गतिं प्राप्नुयात्क्वचित्॥

इति। स्कान्दे च—

श्रुतिस्मृती हि नेत्रे द्वे पुराणं हृदयं स्मृतम्।
श्रुतिस्मृतिभ्यां हीनोऽन्धः काणः स्यादेकया बिना॥
पुराणहीनाद्धृच्छून्यात्काणान्धावपि तौ वरौ।

## पुराणेषु व्यवस्थापकवचनानां मुमुक्षुविषयत्वम्

ननु न वयं व्यवस्थापयामः; अपि तु पुराणवचनान्येव व्यवस्थापयन्ति 'तावत्कर्म्माणि कुर्वीत' इत्येवमादीनि।

मैवम्, तेषां मुमुक्षुविषयत्वात्, मुमुक्षौ च दशाभेदेन क्रियाभक्तिज्ञानानां समावेशो न विरुध्यत एव। यत्पुनर्नारदीयं वचनम्—"यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती" इति, तस्यापि न विश्वासपरिमाणप्रभाव इत्यभिप्रायः, "एतावानिति नैतस्य प्रभावः परिमीयते" इत्युत्तरार्धविरोधात्।

अथ महिमाणान्तरनिराकरणार्थं तत्, एवमप्यनर्थकं प्रसज्ज्येत, इतरपदार्थमहिम्नामपि स्वस्वपरिमाणातिरेकेण परिमाणान्तराभावात्। तस्मादयमर्थः—निरंकुश एवमन्त्रस्य प्रभावः, तथापि यस्य यावान् विश्वासः स तावत्येव मंत्रं विनियुङ्क्त इति तस्य तावदेव फलमिति।

## श्रद्धानिबन्धनव्यवस्थाया निराकरणम्

अपि च किं कीर्तनादौ प्रवृत्तिमात्रहेतुः श्रद्धा, किं वा कीर्त्तनादेः फलसाधनेऽन्तर्भवति ? तत्र यदि तावत्प्रवृत्तिमात्रहेतु तदान्तरेणापि श्रद्धां कीर्त्तनादौ प्रवृत्तस्य पापक्षयो भवेदेव, तस्यैव निरपेक्षसाधनत्वात्, अथ फलसाधनेऽन्तर्भवति, तर्हि तस्याः शास्त्रेण वा साधनत्वं प्रमीयते प्रमाणान्तरेण वा ? तत्र यदा शास्त्रेण तदा श्रद्धासहकृतं कीर्त्तनं पावनमित्युच्यते, तत्र पृच्छामः। सा सहकारिणी श्रद्धा कीर्त्तनमात्रमवलम्बते श्रद्धासहकृतं वेति ? न तावत् कीर्तनमात्रम्, तस्यासाधनत्वात् साधनविषयत्वाच्च श्रद्धायाः, साधनत्वे वा श्रद्धासहकारव्याघातः, अथ श्रद्धासहकृतं वेति, तत् किमात्मना सहकृतं श्रद्धान्तरेण वा ? न तावदात्मना तस्यैव विषयत्वं विषयित्वं चेति व्याघातात्, नापि श्रद्धान्तरेण तत्रापि विकल्पापातात्, तदपि किं केवलमवलम्बते स्वसहकृतं श्रद्धान्तरसहकृतं वेति- तत्राद्ययोरुक्तो दोषः, तृतीयेऽपि श्रद्धान्तरं नाम किं प्रथमा श्रद्धा तृतीया वा ? न तावत्प्रथमा, अन्योन्याश्रयापातात्, द्वितीयश्रद्धानिरूपणे हि तत्सहकृतालम्बना प्रथमा निरूप्यते प्रथमश्रद्धानिरूपणे च तत्सहकृतालम्बना द्वितीयेति, अथ तृतीया सापि यदि द्वितीयासहकृतमालम्बते आयातमन्योन्याश्रयत्वम्, प्रथमासहकृत चेच्चक्रकमापद्यते, प्रथमासहकृत तृतीयालम्बते तृतीयासहकृत द्वितीया, द्वितीयासहकृतं प्रथमेति, चतुर्थादिसहकृतत्वेऽनवस्थापातः, तस्मान्न शास्त्रेण श्रद्धायाः सहकारित्वावगतिः संभवति।

ननु कीर्त्तनस्य कारणत्वविषयिणी श्रद्धा, न पुष्कलकारणत्वविषयिणी, अत कीर्त्तनमात्रविषयत्वेऽपि तस्या न सहकारित्वव्याघातः।

तदयुक्तम् श्रद्धा हि 'साधनमिदं साध्यं न कदाचिद् व्यभिचरति' इति प्रत्ययः, स च पुष्कलकारण एवावकल्पते न कारणमात्रे, तस्माद्दुर्वार एवायं दोषः।

ननु शास्त्रत: कीर्त्तनादेरेव पावनत्वं विश्वासस्यतु प्रमाणान्तरावसेयं सहकारित्वम्, सोऽपि शास्त्रावगतं कीर्तनमात्रादेरेव पावनत्वमवलम्बते, तत्र च नोक्तो दोषः ।

एवं तर्हि यस्मिन्नारोग्यादावन्वयव्यतिरेकौ दृश्येते विश्वासस्य तत्र सहकारित्वमस्तु, पापक्षयः पुनरतीन्द्रियत्वान्न श्रद्धाकिञ्चित्कारमपेक्षते ।

ननु यद्यवगम्यते सहकारित्वमेकत्र श्रद्धाया तर्हि शक्यतएवानुमातुमन्यत्रापि, तथा हि—पापक्षयः श्रद्धादिसहितसाधनवान्, कर्मफलत्वात्, आरोग्यादिवत् ।

तदयुक्तम्, कालात्ययापदिष्टत्वाद्धेतोः, अवशेनेत्यादिशास्त्रविरोधात्, सोपाधिकत्वाच्च, मानान्तरयोग्यत्वं हि तत्रोपाधिः, तस्य च 'साधनाव्यापकत्वे सति साध्यव्यापक उपाधिः' इत्यस्मिन्नुदयननये युज्यत एवोपाधित्वम, 'साध्यसमव्याप्तिः' इति तु मतान्तरे, व्यापकानुपलब्धिलिङ्गकानुमानबाध एवेत्यलमतिप्रसङ्गेन ।

का तर्हि गतिः "श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्" इत्यादीनाम् ?

उच्यते—न तत्र श्रवणादिविधिवाक्यार्थविषयिणी श्रद्धा श्रवणादेः सहकारित्वेन विधीयते, किन्तर्हि ? तत्त्वमस्यादि वाक्यार्थविषयिणी, सा च न प्रतीचः परत्वे वाक्यार्थेऽन्तर्भवति, अपि तु प्रमाणेतिकर्तव्यतात्वेन बहिरेवावतिष्ठते न च तत्रोक्तदोषप्रसङ्गः, "श्रद्धयाग्नि समिध्यते" इत्यादि तु प्रवृत्तिहेतोः श्रद्धायाः स्तावकप्रवृत्तिं विना पुरुषार्थस्यैवासिद्धेः ।

ननु यदि प्रवृत्तिहेतु श्रद्धा, आयातमधिकारिविशेषणत्वं श्रद्धायाः ?

मैवम्, अशाब्दत्वात् ।

नन्वशाब्दमपि सामर्थ्यवद् विद्वत्तावच्चाधिकारिविशेषण भवत्येव शब्दापेक्षितत्वात्, श्रद्धा च शब्दापेक्षिता भवति असमर्थस्याविदुषोऽश्रद्दधानस्यानुष्ठानायोगात् । अतोऽधिकारिविशेषणमेव श्रद्धेति ।

असार्वत्रिकमेतत्, यद्धि बहुलाङ्ग—बहुधनसाध्यं वा बहुकालव्यापि वा स्वरूपेण वा दुष्करं कर्म तत्र न कश्चिदपि श्रद्धां विना प्रवर्तत इति भवत्यधिकारहेतुः श्रद्धा, यत्र पुनः सुकरे कीर्तनादौ प्रकारान्तरेणापि प्रवृत्तिः संभवति तत्रानुपपत्तेरभावादश्रुतत्वाच्च नियमपूर्वकल्पनायोगान्नैवाधिकारहेतुः श्रद्धेति ।

## भक्तिनिमित्तकव्यवस्थायाः प्रत्याख्यानम्

भक्तेरप्यधिकारिविशेषणत्वं न संभवति, सा हि श्रवणादिनवविधभजनलक्षणा भावलक्षणा वा ? न तावद् भजनलक्षणा तस्यामेवाधिकारहेतोर्जिज्ञासितत्वात्, नापि भावलक्षणा, सा हि फलं निमित्तं वा ? तत्र यदि फलम् काम्यमानतयैव तस्या अधिकारविशेषणत्वं न स्वरूपेण, तथा च सति भक्तिकामस्याधिकारः स्यान्न भक्तस्य । न च तस्याप्यधिकारः, ब्रह्महादेर्हननादिजनितदोषनिरासार्थिनोऽधिकृतत्वात् । न च भक्तिकामाधिकारे दोषनिरासोऽप्यन्तर्भवति, अक्षीणदोषस्य भक्तेरनुदयात् —

नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ।

इति वचनादिति वक्तव्यम्, तस्य द्वारमात्रत्वेनानुद्देश्यत्वात् ।

ननु तर्हि निमित्तं भक्तिः श्रवणादिविधेः, तत्र च तस्याः पापक्षयकामनायाश्च संवलितयोरधिकारहेतुता जातेष्टाविव पुत्रजन्मनः तत्पूतत्वादिकामनायाश्च ।

इदमप्यसाधीयः, भक्तेरेव श्रवणाद्यनुष्ठानात्प्रागसिद्धेः, यथोक्तं श्रीभागवते —

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ।।
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ।

अत एवेदमपि प्रत्युक्तं यद् भावोदयादुपरितनानां पापानां भगवद्भजनं प्रायश्चित्तम्, प्राचीनानां तु स्मार्तमिति, श्रवणादिधौतपापस्यैव भावोदयप्रतिपादनात्। नष्टप्रायेति च नष्टानामप्यभद्राणां सत्सु कामादिषु पुनः पुनरुद्भवात् तन्निवृत्तेश्च भावैकसाध्यत्वात्।

तदा रजस्तमोभावा. कामलोभादयश्च ये।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति॥

इति वचनात्।

## प्रीतेरधिकारहेतुत्वखण्डनम्

ननु तर्हि नैष्ठिकी भक्तिरास्ताम्, तस्याः श्रवणाद्यभ्यासपटिमसाध्यत्वात्; प्रीतिमात्रं पुनः प्रागपि जन्मान्तरसंस्कारवशात्संभवतीति तस्यैवाधिकारहेतुतेति।

सदसत्, प्रमाणाभावात्। "सर्वात्मना विदधते खलु भावयोगम्" "त्यक्तान्यभावस्य हरिः परेशः" इत्यादि तत्र प्रमाणम्, तच्च नैष्ठिकीमेवालम्बते।

## भावरूपाया भक्तेः कीर्तनांगत्वस्य निराकरणम् प्रसङ्गान्महद्दर्शनमाहात्म्यवर्णनं च

यत्तु यन्नामकीर्तन भक्त्येति; तस्यापि न कीर्तनाङ्गं भक्तिरित्यर्थः गुणफलाधिकारो हि सः, स्वत एव पापक्षयसाधनं कीर्तनकर्माश्रित्य फलगतातिशयमुद्दिश्य भक्तेर्विधानादनुत्तमं विलापनमिति "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इतिवत्। फलगतातिशयश्चात्र पापकारणानां रागादीनां निवृत्तिः रागादिनिवृतेर्भक्तिसाध्यत्वस्याभिधानात् "केचित्केवलया भक्त्या" इत्यत्रापि भजनक्रियैव भक्तिः; न भाव., तस्या एवाप्रकरणसमाप्तेः प्रपञ्चनात्। 'वासुदेवपरायणा.' इत्यत्रापि न भावः कैवल्यविरोधात्।

ननु समानवाक्योपात्तस्य भावस्य व्यवच्छेदायोगात् तदतिरिक्तसाधनव्यवच्छेद एव कैवल्यम् ।

नैवम्, श्रुतिविरोधिनो वाक्यस्य दुर्बलत्वात् । श्रुतिरिह केवलया भक्त्येति तृतीया । वासुदेवपरायणा धुन्वन्त्यघमिति तु वाक्यम् । अतो गर्भितोऽयं हेतुः—यस्माद्वासुदेवपरायणास्तस्मात्सकलमघं धुन्वन्तीति सर्वानुस्यूतः सर्वाधारश्च देवः परमयनमाश्रयो येषां तेषां सर्वेश्वरसनाथानामुचितमेव सर्वाघविजयित्वमिति भावः । अपि च स्वरूपेण तदाश्रयत्वे मुख्योऽयं शब्दः, भावस्य तु तदालम्बनत्वे गौणः, तस्मान्न भावस्य कीर्त्तनाङ्गत्वे प्रमाणमिदम् ।

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ।

इत्यत्रापि विषयसौन्दर्यादेव प्राप्तस्य रागस्मरणस्य सुकरत्वप्रतिपादनार्थमनुवादः ।

एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः ।।

इत्यत्रापि पातकाभावादेव दण्डानर्हत्वम्, तदभावश्च तत्कारणाभावात् । अत एवोक्तमथ यद्यमीषां स्यात्पातकमिति । रागाद्यभावेऽपि यदि कथञ्चित्प्रमादात्पातकं स्यादित्यर्थः, तदपि हन्त्युरुगायवाद इत्यपि न भावसहकृतकीर्तनम्, अपि शब्दात् केवलं भावोदयात्प्राचीनमेव, अपि तूपरितनमपि पातकं हन्त्युरुगायस्य बहुभिधानस्यानन्तानन्दसुधासिन्धोर्बहुभिर्गीयमानस्य वा सकलजगत्प्रशस्य पुण्यकीर्त्तेर्वादः कीर्त्तनम् । भावस्तु विद्यमानोऽप्युदास्ते, अतितुच्छत्वात्पापनिवृत्तेरिति हि तस्यार्थः ।

ये देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान्नोपसीदत हरेर्गदयाभिगुप्तान् नैषां वयं त्वधिकृताः प्रभवाम दण्डे ।।

इत्यस्याप्ययमेवार्थः । कथम् ? ये समदृशः सर्वात्मभावेन भगवन्तं पश्यन्ति, अतएव साधवो रागादिदोषरहितास्तान्नोपसीदत— तेषांसमीपमपि मा यात, न ह्येषां वयं स्वामिनः, पापिनां हि निग्रहे वयमधिकृताः, न तेषां पापगन्धोऽपि । अथ कथञ्चित्स्यात् पातकं तथापि वयं दण्डे न प्रभवामः, भगवत्प्रपन्नहिते, भगवत्प्रपदनेन कीर्त्तनादीनामन्यतमेन दास्यलक्षणेन वा भजनेनैव निरस्त पापा, अतएव सकलजगत्प्रसिद्धां पापोत्पत्तिं प्रतिपद्यमानां श्रुतिपुराणसिद्धान्तरहस्यगहनगर्भितां तु नन्नि सरणसरणिमविदुषां भवादृशा भ्रान्त्यापि कथञ्चिदुपगमनस्यादिति हरेर्गदया सर्वतो गुप्तांस्तान्नौपसीदतेति: अपि च देवानां मध्ये ये सिद्धा माहात्म्यविशेषसम्पन्नाः पुरन्दरादयः तैः स्वतःपूतै प्यतिशयेन पूतत्वाय परिगीता पवित्रभूता गाथा येषां लक्षणापेतमपि यन्नामाङ्कितं पद्यं वा प्राकृतभाषारचितं वा तेषां पूतत्वे कतमः सन्देह इति ।

"स्वपादमूलं भजतः" इत्यत्र तु विविदिषावाक्यविनियुक्तात्कर्मणोऽन्यत्सर्वमेव मुक्तिविरुद्धं कर्म विकर्मशब्देनोच्यते, न निषिद्धकर्ममात्रम् तस्य कीर्तनादिमात्रान्निवृत्तेर्दर्शितत्वात् । श्रीपराशहरसहितायामपि "न चलति ...." इत्यादिभिरुपलक्षितानां सतत मनसि जनार्दनं दधानानां पापहेतुनां

रागादीनांमुच्छेदो विवक्षितः। पापक्षयः पुनः कीर्तनमात्रम् ।
कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ।।

इति वचनात् । भक्तानां नरकपात यानाशङ्कनीयत्वादेव न तदर्थमयमारम्भः अपि तु तत्रत्यासन्नजनवर्जनार्थम्, यदाह—'व्रजतान्विहायदूरात्' "व्रज भट दूरतरेण मानवानाम्' इति च, अपएवोपक्रमेऽपि "परिहर मधुसूदनप्रपन्नान्" दूरत इति व्याख्येयम् । न च स्तुतिमात्रत्वमेषाम् उपपत्तिमत्त्वात तथा हि—

मकलमिदमहञ्च वासुदेवः परमपुमान्परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान् विहाय दूरात ।।इति ।

अस्य अनन्ते श्रवणादिभिरावर्जिते हृदयगते सति तत्प्रसादादेवाहमिदमिति भोक्तृभोग्यरूपं सकलं जगद्वासुदेवो मायाच्छन्नचित्प्रकाश एव न त मादतिरिच्यते स हि परमपुरान् पुरुष य निरुपाधिकं वरूपं परमेश्वरश्च सर्वाधिष्ठान स एकः वरूपेण, एवं सजातीयविजातीयस्वगतभेदविरहान्नितान्तनिर्भेद भगवत्तत्त्वमिति मतिरचला भवति येषां तान् दूराद्विहाय व्रज भट। तदवलोकनपरिपवित्रिता हि प्राणिनोनैवास्मद्गोचरे वर्त्तन्ति इत्यर्थः । एतदेव स्पष्टीकृतम्—पुरुषवरस्य चैतस्य दृष्टिपाते न तव गतिरथ वा ममास्तीति, महद्दर्शनस्य च पावनत्वं प्रसिद्धमेव—

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ।। इत्यादौ ।

दर्शनं चात्र तत्कर्तृकं तत्कर्मक वा, उभयस्यापि पावनत्वाविशेषाद्, "व्रज भट दूरतरेण तानपापान्" इत्यपि न स्तुतिपरम् कमलनयनकीर्त्तनध्वनिर्हि सर्वतोविसारी कुड्यादिव्यवधानेऽपि वेधकश्च, अतस्तदन्राले वर्तमनानामन्धबधिराणामपि सवषाम नङ्गुलिप्रेक्षणीयत्वात् तान् दूरतरेण व्रजेत्युपपन्न एव तरबर्थः । अपापानिति च न स्वगतपापाभावो विवक्षितः किन्तु परगतपापनिषेधकत्वं प्रयोजनवशात् ।

यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ।।

इत्यत्रापि नियमे स्वाध्यायस्यान्तर्भावात् तस्य च परदेवताप्रकाशकमन्त्रोच्चारणात्मकत्वाद् भक्तया वेशवशादुच्चैरुच्चारणस्यापि सम्भवाद् विवक्षित एव तरबर्थः । उत्तमभागवतास्तु दुर्लभदर्शनास्तेषां हि बहिर्विरलः प्रचारः, प्रचरन्तोऽप्यनुपासितशरीरतया न सर्वैरुपलभ्यन्ते, तेषामपि युग-

मात्रावलोकिनां कथंचित्कश्चिल्लोचनगोचरमवतरतीति दूरादित्युक्तम् ।

यस्य देवे च मन्त्रे च गुरौ च त्रिषु निश्चला ।
न व्यवच्छिद्यते भक्तिस्तस्य सिद्धिर्न दूरतः ।।

इत्यादौ तु सिद्धिरपवर्गादिलक्षणा; न पापक्षयलक्षणा, वचनान्तरानुरोधात् । तस्मात्केवलं कीर्त्तनादि पापक्षयहेतुः, न तत्र भक्तिरङ्गम्, अधिकारिविशेषणं वा ।

## अभिधेयज्ञानस्य कीर्तनाङ्गतायाः प्रत्याख्यानम्

अभिधेयज्ञानमपि नाङ्गं प्रमाणाभावादेव। ननु दर्शितं प्रमाणम् ।

सत्यं दर्शितम् न तु तदङ्गत्वे प्रमाणम्, "यद् व्याजहार विवशो" "हरिरित्यवशेनाह" "साङ्केत्यं पारिहास्यं वा" "हरिरवशाभिहितोऽप्यघौघनाशः" "अवशेनापि यन्नाम्नि कीर्त्तिते" "हरिरिति सकृदुच्चरितं दस्युच्छलेनापि यैर्मनुजैः" इत्यादि बहुतरप्रमाणविरोधात्, न चैतेषामतत्परत्वम्, अभ्यासगतिसामान्याभ्यामित्यवादिष्म ।

नन्वपिशब्दयोगादेषामतत्परत्वम् ।

मैवम्, भागासिद्धत्वाद्धेतोः, "यद् व्याजहार विवशो" इत्यादावदर्शनात् ।

ननु तत्राप्यध्याहार्योऽपिशब्दस्तदर्थस्य विवक्षितत्वात्, अन्यथा ज्ञानपूर्वककीर्त्तनस्यापावनत्वप्रसङ्गात् ।

तदयुक्तम्, न हि श्रुतबाधायाध्याहरन्ति, अपि तु श्रुतोपपत्तये एवं च सिद्धमेवावशात् कीर्त्तनस्य पावत्वम् । अपि च, अपिशब्दयोगे तदपि स्यात्, न तु तदेवेत्येतावत्, न पुनस्तन्न भवत्येव ।

ननु त्रिशब्दयोगे तात्पर्यमन्यत्र स्यात्, अतात्पर्यविषये बाधकाभावसव्य-पेक्षमेव प्रामाण्यम्, एषां च बाधकस्य विद्यमानत्वान्न प्रामाण्यमिति ।

इदमसाधु ज्ञानाख्यगुणविधाकं हि तस्य बाधकम्, न च "यतस्तद्विष-या मतिः" इत्यादेर्विधायकत्वम्, उपपत्त्यर्थवादो ह्यसौ सर्वानर्थनिबर्हणीं ब्रह्मविद्यामुत्पादयतः पापनिर्हरणे कियान् प्रयास इति । 'ना स्वस्त्ययनं हरे." इति स्वस्तिशब्देन मोक्षोऽभिधीयते, स्वस्तीत्यविनाशिनामेति नैरुक्ताः । मोक्षसाधनत्वं च न विधीयते पदार्थशक्तेरविधेयत्वात्, किन्तु सिद्धमेव स-ङ्कीर्त्यते श्रुतसाध्यत्वोपपत्त्यर्थम्, तद्वदत्रापि । नन्वर्थवादाद्विधिः श्रेयान् ।

न श्रेयान् यत्र गुणवादः प्रसज्येत. इह पुनर्थवादत्वेपि यथार्थवाद एवेति नायं न्यायः । अपि च बहुतराणां स्वरसत एव प्रतीयमानं प्रमाणा-न्तरैरविरुद्धमनधिगतमुपयुक्तमर्थमनुवाद्य द्वित्राणां वा विधित्वं कल्प्यताम्, सर्वेषां च स्वं स्वमर्थमजहतामर्थवादत्वमिति मीमांसायामपङ्क्तिभेद एव श्रेयान् । अपि च कैमुत्यविवक्षायां दृष्टान्ता नोपपद्यन्ते—

अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्त्तितमघं पुंसां दहत्येधो यथानलः ॥

यथागदं वीर्यतममुपयुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणान् कुर्यान्मन्त्रोऽप्युदाहृतः ॥

हरिर्हरत्ति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥

इत्यादयः, साध्यवैकल्यात् न हि तेषु कैमुत्यमस्ति, अपि तु ज्ञानाज्ञान-योः साधारण एव साधकभावः, अपि च "नारायणेत्येतज्जगाद चतुरक्षर-म्" "हरिरित्यक्षरद्वयम्" इति वदन् शब्द एव विवक्षितो नार्थानुसंधान-मित्यभिसंधत्ते । अन्यच्च "यतस्तद्विषयामतिः" इत्यादौ न विधिः कल्पयितुं

शक्यते, साधिकारं ह्रीदं वाक्यम्, न च साधिकारे वाक्ये गुणविधिमनुमन्यन्ते न्यायविदः। वैरूप्यं हि तदा प्रसज्येत प्रवृत्तिरपि स्वविषज्ञानापेक्षिणी न पुनर्नामिज्ञानापेक्षिणी। तस्मान्न ज्ञानमङ्गं कीर्तनस्य, नाप्यधिकारहेतुः।

## अनुतप्ताननुप्तभेदमूलकव्यवस्थायाः खण्डनम्

यदप्युक्तम्—अनुतप्ताननुप्तभेदेन सकृत् कृतमावर्त्तितं च कीर्तनं व्यवस्थितमिति, तदपि नातीवाभिप्रेतम्। तथा हि—विधाद्वयमप्येतत् किं विधिसामर्थ्यान्निवर्तकं पातकस्य, किं वा स्वसामर्थ्यात्? तत्र यदि विधिसामर्थ्यात् तर्हि भवितव्यमुभयत्राप्यनुतापेन, अनुतप्ता एव हि प्रायश्चित्तविधावधिक्रियन्ते। यदि स्वसामर्थ्यात् तर्हि न न कुत्रचिदनुतापोपयोग, न खलु पदार्थस्वभावः पुरुषगतां योग्यतामपेक्षते, त हि तपनस्तपस्विनयनाङ्गनगतानेव तमस्तमालमण्डलीमुन्मूलयति न तु चाण्डालचक्षुश्चत्वरवर्त्तम नामित्यस्ति नियमः।

अहि चेहस्वमहिम्नैव पावनत्वमुचितं न तु विधिसामर्थ्यात्। विधेर्हि विधाद्वयम्, लिङादियुक्तं वाक्यम्, लिङाद्यर्थश्च, तत्र प्रथमो विधिः प्रमाणमेव, प्रमाणं च प्रमेये न कथंचिदविद्यमानं महिमानमुत्पादयति, अपि तु यथावस्थितमेव वस्तुतत्त्वमनवगतमवगमयत्येव। उक्तं हि मीमांसाभाष्यकृद्भिः "उपायं तु न वेद स योपायः कथनीयः" इति। नैष्कर्म्यसिद्धिकारैरपि—

उपायान् प्राप्तिहानार्थान् शास्त्रं भासयतेऽर्कवत्।

इति, द्वितीयः पुनः फलसाधनत्वमेव न तस्य पुनः साधनाधीनसाधनत्वम्, तस्मात्स्वमहिम्नैव पावनत्वंस्वमहिम्नैव चेदमंहसां निवर्त्तकं कीर्त्तनम्। आवृत्तेरुच्चाटनमन्त्रो जप्त एव श्रद्धादीनामपि न हि मिहिररतिमिरं विहन्तुमुदयमावर्त्तयति श्रद्धादिकं वापेक्षते। न च मन्तव्यमावृत्तरयैवरता-

दृशः प्रभावः न तु सकृत्कृतस्येति; सकृत्कृतस्यापि पावनत्वप्रतिपादकानां वचनानामनेकेषां दर्शितत्वात् । न च तेषामवयवानुवादानां द्वादशकपाल-प्रशंसार्थतावदावृत्तिगुणयुक्त कीर्तनप्रशंसार्थतेति वाच्यम्, स्वार्थे प्रामाण्यस्य प्रबन्धेन प्रतिपादितत्वात् । तस्माद् व्यवस्थैव परं परिशिष्यते, सा च न सम्भवतीत्यभिहितमेव ।

## अनुताप वषयकवचनव्याख्या

ननु तर्हि कथमनुतापमावृतिं चाभिदधद्वाक्यजातं व्याख्येयम् ?

व्याख्यायते—कृते पापेऽनुताप इत्यस्य तावत्पापक्षयसाधनं कीर्तनमित्येतावानेवार्थः, तथा हि—प्रायश्चित्तशब्दस्तावत्कीर्तने न मुख्यः ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।

इति व्याख्यानात् । न च कीर्त्तनं तयोरन्यतरदुभयं वा, अतो गौणोऽयं यथा प्रायश्चित्तं हितसाधनं तथेदमपि हितं च द्विविधम् सुखप्राप्तिरनर्थ-परिहारश्च; तत्राप्यनर्थपरिहारलक्षणं हितं विध्यपेक्षितत्वं समर्पयति ।

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।

इति । यो हि यस्मादनुतप्तस्तस्य तन्निवृत्तिरेव हितं, ततश्च पापादनुतप्तस्य कीर्तनं हितसाधनमित्युक्ते पापक्षयसाधनमित्युक्तं भवति ।

परशब्दश्च केवलशब्दपर्याय कीर्तनमेव पुष्कलं साधनमित्यर्थः । एकमिति सकृदिति च हरिकीर्तनस्य सर्वस्यैव स्मारकत्वात् संस्मरणमित्यनुवादः, स च प्ररोचनफलः, समीचीनं ह्येतदिति, स्वर्गकामादिपदमपि समीहितलक्षणस्य विधेः प्रथमापेक्षितसमीहितविशेषणसमर्पणपरमेव न पुरुषपरम्, अर्थनस्तु 'स्वर्गकामोऽधिकारी' इति मीमांसाहृदयवेदिनां निर्णयः ।

नन्विहापि तर्ह्यनुतप्तस्याधिकारः प्राप्त एव ।

मैवम् अत्यन्तसुकरत्वेनान्यथापि प्रवृत्तिसम्भवात् । अशाब्दत्वादेव च फलकामनायाः प्रकारान्तरेणापि प्रवृत्तस्य पापक्षयो भवेदेव ।

नन्वेवं तर्ह्यस्वर्गकामस्यापि यागादौ प्रवृत्तस्य स्वर्गः किं न स्यात् ?

को वा ब्रूते प्रवृत्तस्य न स्यादिति किन्तु प्रवृत्तिरेव तस्मिन्फलकाम-नामन्तरेण न सम्भाव्यते दुर्भरगरिमत्वात्, कौतूहलादिकमपि न सकला-ङ्गकलापव्यापिनीं प्रवृत्तिमुत्पादयितुमलम्, अतस्तत्कामस्यैव तत्राधिकारः। इह पुनः फलाभिसंधिमन्तरेणापि स्वभावसुभगतया सुकरतया च सुलभा प्रवृत्तिरिति सर्वस्यैवाविकलवागिन्द्रियस्याधिकारः, अत एव सुकरेषु कर्मसु फलकामनां विनापि प्रवृत्तिः सम्भवति, प्रवृत्तस्य च फलसिद्धेरनिवार्य-त्वात्। तस्याश्च संसारहेतुभावान्मुमुक्षोः काम्यकर्मत्यागं समादिशद्भग-वान्—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।

इति। तस्मादनुतापो नाधिकारे हेतुः, नाप्यङ्गं कीर्त्तनस्य, अवशेने-त्यादिप्रमाणविरोधात्। कृष्णानुस्मरणं परमित्यत्रापि परमुत्कृष्टं प्रायश्चि-त्तमत्यन्तशुद्धिसाधनमावृत्तिगुणकं कृष्णकीर्तनमिति विवक्षितम्। अत्यन्त-शुद्धिश्च सह वासनाभिः पापानां परिक्षय इति प्रपञ्चितमेव। ततश्च भवि-ष्यद्भिः पापैरनुपश्लेषः फलमावृत्तेः, कीर्तनमात्रस्य पुनः प्राचीनपापक्षय इत्युक्तं भवति। अत एवोक्तमुत्तरश्लोकेन "कृते पापेऽनुतापो वै यस्य" इति। अन्यथा हि सामान्येन पापादनुतापो यस्येत्यवदिष्यत्।

## आवृत्तानावृत्तकीर्त्तनविषयकवचनव्याख्यानम्

एवं सर्वत्रावृत्तानावृत्तकीर्त्तनविषयाणि वचनानि व्याख्येयानि। अत्रा-वृत्तविषयाणि तावत्—

नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे।
तत्कर्मनिर्हारमभीप्सतो हरेर्गुणानुवादः खलु सत्त्वभावनः॥

इत्यत्रावृत्तस्य भगवत्कीर्तनस्यात्यन्तशुद्धिहेतुत्वं स्पष्टमेव।

नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्त्तनात्।

इत्यत्रापि मुमुक्षूणामधिकृतत्वादत्यन्तशुद्धिरेव विवक्षिता।

किङ्करा दण्डपाशौ वा नियमो न च यातनाः।

समर्थास्तस्य यस्यात्मा केवलालम्बनः सदा ॥

इत्यत्रापि यस्यात्मा केवलालम्बनस्तस्य सदा न समर्था इत्यन्वयः, वचनान्तरानुरोधात् ।

गोमूत्रयावकाहारो ब्रह्महा मासिकैर्जपैः ।

इत्यादावपि मोक्षसाधनत्वादष्टाक्षरब्रह्मविद्यायाः, मोक्षस्य च परमशुद्धिरेव विवक्षिता न पापक्षयमात्रम् । ततश्च तत्तदावृत्तिविशेषात्तत्तत्पापवासनाविनिवृत्तिस्ततश्च पुष्कलशुद्धिरिति । अथवा सकृत्कीर्त्तनादेव प्रक्षीणेऽपि पापे कस्यचिदश्रद्धारोपितमपूतत्वमात्मनि मन्यमानस्य तन्निबन्धनं दुःखं न निवर्त्तते, तस्य तदारम्भकपातकप्रध्वंसायावृत्तिविशेषयुक्तं मन्त्राध्ययनं विधीयते ।

## आवृत्तकीर्त्तनस्य प्रारब्धक्षयार्थत्वमनावृत्तस्य चाप्रारब्धप्राचीनाघसंहारार्थत्वमिति निश्चयः

प्रारब्धपरिक्षये च युक्तमेवावृत्त्यपेक्षणम्, आरोग्यादिषु तथादर्शनात् ।

ननु यथोक्तावृत्तिविहीनाभ्यामपि श्रवणकीर्त्तनाभ्यां प्रारब्धपरिक्षयोऽपि श्रीस्कन्दपुराणनरसिंहपुराणयोर्दृश्यते ?

सत्यम्, तत्तु श्रीमत्पञ्चाक्षरनारदादिमहापुरुषानुग्रहसहचारितयेति निश्चीयते, तस्मादावृत्तिविधीनामन्यार्थत्वादप्रारब्धप्राचीनपापक्षये सकृत्कीर्तनमेव साधनमिति निरपवादम् । अत्र वचनानि सन्त्यनन्तानि, तथा हि—

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥

इति । परिकरबंधश्चात्र प्रक्षीणपापत्वमेव, तत् खलु प्रथमं सोपानमपवर्गप्रासादारोहणस्य । तथा—

हत्यायुतं पानसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयान्यसंख्यानि हरेः प्रियेण गोविन्दनाम्ना निहतानि सद्यः ।

इत्यत्रापि सद्यस्तदानीमेवेत्यावृत्तिनैरपेक्ष्यं दर्शयति ।

प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयं नरः ॥

इत्यत्रापि सद्य इत्युपजीव्यते, नरमात्रस्याधिकृतत्वाद् विश्वासादिनिरपेक्षता । प्रातरादीनां च विकल्पो न तु समुच्चयः, सद्यस्त्वव्याघातात् । ततश्च कालविशेषो नादरणीय इत्यर्थः ।

तथा—

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

इत्यत्रापि सद्य इति विवक्षितम् । सिंहत्रस्तैर्मृगैरिवेत्यस्यायमर्थः—यथा कश्चिद्राजकुमारः सिंहशिशुं परिगृह्य पञ्जरे निधाय पुष्णाति तेन च यूना परिचयप्ररूढानुरागेण वनान्तरे विहरति, तस्माच्चकितैर्वनगजव्याघ्रादिभिर्मुच्यते दूरात्, तथा वदनपङ्कजस्थान्नरहरिनामधेयकण्ठीरवाद् भीतैः पातकैः पुरुषः परिह्रियत इति । तथा—

यत्कीर्त्तनं यच्छ्रवणं यदर्पणं यद्वन्दनं यत्स्मरणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति किल्बिषं तस्मै सुभद्रश्रवसे नमो नमः ॥

इति । अस्यार्थः—अर्पणमत्रात्मनिवेदनम्, अर्हणमर्चनम्, अत इह षड्भक्तयो गृह्यन्ते । ताश्च प्रत्येकं किल्बिषविधूननेन सम्बध्यन्ते । न च ताभिर्विशिष्टं किल्बिषविधूननमेव वाक्यर्थः तस्य फलत्वेनाविधेयत्वात् । न च तासां पार्ष्ठिकः परस्परान्वयः, त्रियात्वात् । न चात्र चादि श्रूयते समासो वा द्वन्द्वः येनाग्नेयादीनामिव समुच्चयः स्यात् । तस्मात् "लोकस्य सद्यो विधुनोति किल्बिषम्" इतिपदचतुष्टयस्य तन्त्रेणावृत्त्या वा षडिमानि

वाक्यानि । ततश्च तासां समशिष्टत्वादन्योन्यनिरपेक्षाणां पापक्षयसाधनत्वम् तच्च सद्य एवेत्यावृत्तिनिरपेक्षतेति । अनुवादोऽप्ययमेतादृश विधिमनुमापयतीति तद्द्वारेण प्रमाणमेव । अस्मिन्विषये भगवच्छ्रीरामवाक्य च—

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ।।

इति । अवतारान्तराणि कदाचित्कपटमप्यरिषु प्रयुञ्जते प्रयोजनवशात्, न भक्तेषु; श्रीरामचन्द्रः पुनः परिपन्थिष्वपि न मनाङ्मनोविसंवादिनी वाणीं प्रयुङ्क्ते । अन्यान्यप्येवजातीयकान्युदाहार्य्याणि, तस्मादप्रारब्धप्राचीनपापक्षयः सकृत्कीर्त्तनादेवेति,

नन्वनागतानामनुपश्लोषोऽपि सकृत्कीर्त्तनादेव दृश्यते—

वर्त्तमानं च यत्पापं यद्भूतं यद्भविष्यति ।
तत्सर्वं निर्दहत्याशु गोविन्दानलकीर्त्तनम् ।। इति ।

तदसत्, अत्राप्यावृत्तेरुपसंहारात् । न चाशुशब्दस्तदुपसंहारविरोधी, आशुभावो हि शीघ्रता, सा च सातिशया, अतिशयश्चापेक्षिकः, ततश्च साधनान्तरेभ्यः सकासादाशुत्वम्, न पुनः सद्यःसाधनत्वमिति ।

## कीर्तनस्य सर्वाघसंहारित्वे मृत्युकालस्याविवक्षितत्वम्

यत्पुनरुक्तं मरणावसरे कृतस्य कीर्त्तनस्य विश्वासाद्यभावेऽपि सर्वाघसंहारित्वमिति, तदप्यसद्,

म्रियमाणो हरेर्नाम गृह्णन् पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन् ।।

इति स्वयमेव मरणकालस्याविवक्षितत्वप्रतिपादनात् ।

नन्वपिना प्रस्तमविवक्षितं भवति, तत्प्रतियोगि च कैमुत्येन सम्बध्यते, तत्र श्रद्धायाः कैमुत्येनान्वयादश्रद्धेयमेवापिशब्देन सम्बध्यते, पुत्रोपचरित-

मपि हरेर्नाम गृणन्निति । तस्मात्तस्या एवाविवक्षा न म्रियमाणतायाः ।

अत्रोच्यते—हरेर्नामग्रहणमिह विशेष्यं तस्य च म्रियमाणः पुत्रोपचारितं श्रद्धया चेति विशेषणानि, प्रधानान्वयित्वाद् गुणानाम् । विशेषणं च विवक्षितमविवक्षत वा, तत्र कैमुत्येनान्वयो विवक्षितस्य, अविवक्षितस्य पुनरपिना । तत्र यदि म्रियमाणो मुख्योऽधिकारी तर्हि स्वस्थोऽप्येवं किमुत म्रियमाण इत्यवक्ष्यत्, न चैवमवोचत, तस्मान्म्रियमाणो नस्यच्चेताः श्रद्धातुमसमर्थोऽपि पुत्रोपचरितमपि गृणन्नजामिलो हरेर्धामैवागात् किमुत श्रद्धया हरिमेव गृणन्नित्यविवक्षितैव म्रियमाणता । श्रद्धापि मुक्त्यर्थमेव विधीयते न पापक्षयमात्रार्थम्, अगाद्धामेति वचनात् । सा च—

यद्यस्तीति न वक्तव्यं पुत्रसदिग्धकं वचः ।
सर्वस्मादधिकोऽस्त्येव शिवः परमकारणम् ॥

इत्याद्युक्तलक्षणा, न तु कीर्त्तनविधिविषयिणी, तस्याः फलोपकारित्वस्य निराकृतत्वात् । अपि चाजामिलस्यापि न मुख्या म्रियमाणता, कीर्त्तनोत्तरकालमप्यवस्थानप्रतिपादनात् तस्य च तावतैव पापक्षयप्रतिपादनादविवक्षित एव मरणकालः । "नामानि येऽसुविगमे विवशा गृणन्ति" इत्यत्रापि विवशसाहचर्यादसुविगमो न विवक्षितः, न हि विवशत्वं विधीयते, तद्वदसुविगमोऽपि । तनश्चासुविगमेऽपीत्यर्थः न पुनरसुविगम एवेति । एव 'मरणे हरिमुच्चरेत्' इत्यत्रापि मरणेऽपि हरिशब्दमुच्चरेदिति व्याख्येयं समानविषयत्वात् । तत्सालोक्यादिफलेषु पुनरुपासनेष्वन्त्यप्रत्ययोऽभ्यर्हितः, "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति श्रुतेः । ततश्च—

प्रयाणकाले मनसाचलेन बुद्ध्या युक्तो योगबलेन चैव
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥

इत्यादिषु विवक्षित एव कालः ।

## देशकालवैशिष्ट्यप्रतिपादकवचनानां पुरश्चरणादिकर्माङ्गत्वम्

ये पुनर्ग्रहणादयः कालविशेषाः पर्वताग्रादयश्च देशविशेषास्तत्र तत्रोक्तास्ते पुरश्चरणादिकर्माङ्गभूताः। पुरश्चरणं च मन्त्राणां संस्कारकम्, आधानमिवाग्नीनाम्। संस्कृतानां च तेषामैहिकामुष्मिकफलसाधनेषु कर्मसु विनियोग इति तत्रैवोपयोगस्तेषां न तु पापक्षयायोपयोग इति।

## प्रत्याहारादिधर्माणां कीर्तनाङ्गत्वनिरासः

ये च प्रत्याहारादयो धर्माः—

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम्।
अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः॥

इत्यादि शास्त्रोक्ताः, तेऽपि न जपमात्रोपयोगिनः तत्संपत्तिहेतुत्वाभिधानात्। संपत्तिश्च विशिष्टेष्टप्राप्तिसाधनत्वलक्षणा, तस्यां चोपयुज्यन्त एव ते। पापक्षयः पुनः कीर्त्तनादेवेति पटहघोषः पुराणानाम्।

अथ वा जपस्यैवैते धर्मा न तु कीर्त्तनस्य, अन्यो हि जपोऽन्यच्च कीर्त्तनं भिन्नविषयत्वात्तयोः। तत्र मन्त्रोच्चारणं जपः, नामोच्चारणं तु कीर्त्तनं, मन्त्रोऽपि नाम स यः स्वरादिविशिष्टो देवताप्रकाशको वर्णसमुदायः, विशिष्टदेवतावाचकं तु पदमात्रं नाम।

क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्।

इत्यत्र तु कीर्तनमेव जपशब्देनोच्यते संबुद्ध्यन्तत्वाद्वासुदेवशब्दस्य। श्रीमद्द्वादशाक्षरविवक्षायां हि चतुर्थ्यन्तेन तेन भवितव्यम्। न तु जपगता एव धर्मा देवतासामान्यात्कीर्त्तनेऽतिदिश्यन्ते, श्रीविष्णुधर्मे—

चक्राङ्कितस्य नामानि सदा सर्वत्र कीर्त्तयेत्।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः॥

इति देशकालशौचानामनपेक्षणीयत्वप्रतिपादनादेव केवलश्रुतिविरोधाच्च।

## क्वचिच्छ्रूयमाणधर्माणां मोक्षसाधनकीर्तनाङ्गत्वम्

ननु कीर्त्तनेऽपि श्रूयन्ते धर्माः—

नक्तं दिवा च गतभीर्जितनिद्र एको
निर्द्वन्द्व ईक्षितपथो मितभुक् प्रशान्तः।
यद्यच्युते भगवति स्वमनो न सज्जे-
न्नामानि तद्रतिकराणि पठेदलज्जः ॥

इति । सत्यं श्रूयन्ते, ते तु मोक्षसाधनस्य कीर्तनस्याङ्गभूताः, न पुनरघविघातकस्य, यद्यच्युते मनो न सज्जेदितिसमाधेरनुकूलत्वेन कीर्त्तनस्य विधानात्, समाधेश्च मोक्षफलत्वेन प्रसिद्धेः ।

## कीर्तनस्य ज्ञानद्वारकमोक्षसाधनत्वसमर्थनम्

ननु कीर्त्तनं क्रिया, न च क्रियासाधनो मोक्षः, तस्य श्रुतिस्मृतीतिहासपुराणागमयुक्तिभिर्ज्ञानैकोपायत्वेनाचार्यैरवधारितत्वात् ।

ज्ञानसाधनत्वमेव तस्य मोक्षसाधनत्वम्, अत एव समाधेः कार्य्ये विधानम्, न हि समाधिरपि मोक्षसाधनम्, किं तर्हि ? ज्ञानसाधनमेव, तदपि न साक्षाच्छ्रवणवत्, अपि तु प्रतिबन्धनिरासद्वारेण, एवं कीर्त्तनमपि ।

## कीर्तनतो मोक्षोपलब्धौ क्रमनिरूपणम्

तत्रायं क्रमः—कीर्त्तनात् पापक्षयः तदावृत्त्या तद्विषयाणां वासनानां प्रचयः, अपचयश्च पापवासनानाम्, ततो भगवज्जनसंवासातत्यम्, ततस्तदुपवर्णितमहिमनि भगवति पुण्यश्लोकशेखरे श्रीरामे भगवति नैष्ठिकी भक्तिः, ततः शोकादीनामत्यन्तोच्छेदः, ततः सत्त्वस्य परमोत्कर्षः, ततस्तत्त्वसाक्षात्कारः, ततो मुक्तिरिति । अयमर्थः श्रीभागवते सविस्तरमुपवर्णितः, तत्र तत्रोक्तं च भगवता—

मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ।

इति । तत्र श्रुतिशिरःसिद्धान्तं यस्य श्रुतवतोऽपि कुतश्चित्प्रतिबन्धा-

तत्त्वज्ञानमुत्पन्नमपि निमीलितमिव, तस्य भगवद्भक्तिरुक्तया रीत्या प्रतिबन्धं निरुध्य तत्त्वज्ञानमुन्मीलयति, यः पुनरश्रुतवेदान्तसिद्धान्त एव जगदेकनियन्तुर्नियन्त्रणादयामृतमहार्णवस्य महाविष्णोः प्रह्लादहृदयसुधासरित्पतिपर्य्यङ्कशायिनः श्रीनृसिंहस्य नामानि निरन्तरभावर्तयति, तस्य भगवान् स्वयमेव देहावसानसमये संसारतारकमात्मज्ञानमनुगृणाति । श्रूयते हि तापनीये —

"देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे इति तान् प्रजापतिरब्रवीदेतैर्मन्त्रैर्देवं स्तुध्वं ततो देवः प्रीतो भवति स्वात्मानं दर्शयति य एतैर्मन्त्रैर्नित्य देवं स्तौति स देवं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति च ।"

अत्र च 'स्तुतो देवः प्रीतो भवति स्वात्मानं दर्शयति' इत्येतावदुपजीव्यते, जपकीर्तनयोः साधारण्यात्, साधारण्यं च प्रसिद्धमेव । तथा हि— 'स्तुतः प्रीतो भवति' इति स्वात्मनि परत्र च दृष्टमेव, प्रीतश्च स्वात्मानं दर्शयेदेव, अवञ्चनरसत्वात् प्रेम्णः ।

## सर्वैर्नामभिर्मन्त्रैर्वा भगवतः स्तवनकीर्तनयोः श्रुतिसम्मतत्वम्

स्तुतिस्तु श्रीमन्मन्त्रराजेन मन्त्रान्तरैर्वा नामभिर्वा, नाम्नां च सर्वेषामेव श्रुतिसम्मतत्वात् ।

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्त्तन ।
आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ।।

इति श्रूयते । दीर्घतमसो वाक्यमेतत्, अस्यार्थः—उकारः छन्दःपूरणार्थः, हे जानन्तः स्वार्थकुशला जनास्त देवम् अस्ति कश्चिदीश्वर इत्याबालगोपालप्रसिद्धम् पूर्व्यं पुरातनं सर्वस्याधिष्ठानमधिष्ठातारं च, ऋतस्य गर्भम् उपनिषदस्तज्जन्यज्ञानस्य वा जठरे वर्त्तमानम् औपनिषदसिद्धान्तसिद्धयाथात्म्यं स्तोतारः— श्रौतैस्तान्त्रिकैः पौराणिकैः पौरुषेयैर्वा स्तुध्वमिति विपरिणामः, न चैवमेव स्तोतव्यमिति कश्चिदस्ति नियमः, यथा विद यथा जानीथ तथा स्तुध्वं मन्त्रैः स्तुध्वमिति भावः । ततश्च जनुषा पिप-

र्त्तन, छान्दसस्तनबादेश: कर्मकर्तृव्यत्ययश्च जनुषा जन्मना पिपर्त्तन पिपृत पूर्यध्वं जन्मन पूर्त्तिं प्राप्नुत जन्मानि समापयतेति भाव: । अथवा नं देव जनुषा पिपर्त्त। स्वच्छन्दचरितेन बहुविधेन जन्मना पूर्यत म-त्स्याद्यवतारैरन्वितं वर्णयतेत्यर्थ: । अथैवमपि वय स्तोतुमसमर्था:, अस्य भग-वत: श्रीमन्नामाप्याविवक्तन सदा कीर्त्तयत 'हे विष्णो व्यापक ते मह: प्रकाशं त्वत्स्वरूपप्रकाशिकां सुमतिं शोभनां मतिं मजामहे' इति । अत्रापि व्यत्यय: 'मजामहै' इति । ब्रह्मविद्यामाशासाना: कीर्त्तयतेत्यर्थ: ।

ततश्चापवर्गफलकज्ञानसाधनत्वमेवापवर्गसाधनत्व कीर्तनस्य । मन्त्रोऽ-प्ययं विधायको मविष्यति ।

विधिशक्तिर्न मन्त्रस्य नियोगेनापनीयते ।
स्वतो विधास्यति ह्येष नियोगात् स्मारयिष्यति ।। इति न्यायेन ।

## नाममन्त्रस्यैव पुरुषार्थसाधनत्वद्योतकानि श्रुतिपुराणवचनानि

एवमन्येऽपि नाममन्त्रस्यैव पुरुषार्थसाधनत्वद्योतका मंत्रा: सन्त्यने-कश:—

"कस्य नूनं कतमस्यामृतानां मनामहे चारुदेवस्य नाम" । "सदा ते नामस्वयशो विवक्मि" । "भूरि नाम मनामहे" । इत्यादय: । तेषां च तै-स्तैरसाधारणै: 'अमृतानां प्रथमस्य' इत्यादिमिर्लिङ्गैर्भगवद्विषयत्वम् 'आ-काशस्तल्लिङ्गात्' इति न्यायेन । पुरुषार्थसाधनत्वं च नाम्नो ज्ञानद्वारेणै-वाभिप्रेतं पूर्वेण समानार्थत्वात् । पुराणवाक्यं च—

यावज्जीवं प्रणवमथ वावर्त्तयेद्रुद्रियं वा
याजुर्वेद वसतिमथ वा वाराणस्यां विदध्यात ।
हित्वा लज्जां कलिमलकुलच्छेदकानीरयेद्वा
विष्णोर्नामान्यनिशममृतत्वाप्तिरेषा चतुर्धा ।।

इति । वाराणसीवासस्य तारकब्रह्मबोधद्वारेणामृतत्वप्राप्तिसाधनत्वं काशीखण्डादिषु प्रसिद्धम्, तत्समभिव्याहारादनुकीर्तनस्यापि तद्वदेवेति ।

एवं चामृतत्वसाधनस्य कीर्तनस्य धर्मा गतभीत्वादयो न पापक्षयसाधनस्य। पापक्षयस्तु यथाकथंचिज्जिह्वाङ्गनमागतान्नाममात्रादेवेति। अत एव सौरपुराणे निरन्तरं हननापहारादिषु प्रवृत्तस्यापरानपि तत्रैव प्रवर्तयितुमाहर प्रहर संहरेति व्याहरतो व्याडिनाम्नो व्याधस्य पदान्तरावयवत्वेन प्रसङ्गागतादपि हरशब्दात् सर्वाघसंहारो वर्णितः, तदभ्यासाहितात्संस्कारप्रचयादनन्तरजन्मनि तत्त्वज्ञानमपि वर्णितम्।

## नामकीर्तनस्येतिकर्तव्यतादिनिरपेक्षत्वेऽपि विधित्वसमर्थनम्

ननु यदि न काचिदितिकर्तव्यता कीर्तनस्य कथं विधानम्? "अङ्गप्रधानवत्यां भावनायां युगपत्पुरुषनियोगः" इति शाबरभाष्यम्, भट्टवार्त्तिकं च—

किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ। इति।

सत्यवदनादीनामिवेति ब्रूमः, न हि तत्र किञ्चिदङ्गमुपदिश्यते, नाप्यतिदेष्टुं शक्यते, तल्लिङ्गाभावात्। न चैतावता प्रतीयमानो विधिरपलपितुं शक्यते, तथेहापि भविष्यति।

ननु तत्रापि लौकिकं किञ्चिदुपकारकमस्त्येव सर्वथैवानुपकृतत्वे तु तत्रापि विधानं नाभविष्यदेव?

इहापि तर्हि मनोवाक्कायस्थानानामन्योन्यसंयोगो लौकिक एवोपकारको भविष्यति येन विना शब्दोच्चारणमेव न संभवति, अथवा किमस्माकं विध्यन्तरसाधर्म्यसमर्थनेन? ईदृश एवायमपूर्वो विधिः स्वरूपकथनं वा प्रमाणान्तरानवगतं कीर्त्तनस्य पापक्षयसाधनत्वमबाधितमवगम्यमानमपह्नोतुं न शक्नुमः।

## कीर्तनीयानां भगवन्नाम्नां समस्तानां व्यस्तानां वोक्तं सामर्थ्यमिति विचारे पूर्वपक्षः

ननु किं समस्तानामेव भगवन्नाम्नामेतादृश सामर्थ्यमुत व्यस्तानामपि?

न तावत्समस्तानामेव, अवशेनेत्यादिविधिना विरोधात्, न ह्यवशेन समस्तानामुच्चारणं सम्भवति। अथ व्यस्तानाम्, तत्रापि किं सर्वेषामेव? उत केषांचिदेव? तत्र यदि सर्वेषामपि नरकसृष्टेरानर्थक्य प्रसज्येत; न ह्याजातिबधिरस्य कस्याप्येतत्संभाव्यते यन्नामसहस्रमध्ये किञ्चिदपि कदाचिदपि कथंचिदपि न शृणोति न गृह्णाति। अपि च यदि सर्वेषां समानं सामर्थ्यम् एकेनैव पुरुषार्थसिद्धेरन्येषामानर्थक्यं प्रसज्ज्येत। अन्यच्च समानमहिम्नां नाम्नां समाहारे तन्महिम्नामपि समाहारादेकस्य श्रीरामनाम्नो नामसहस्रसाम्याभिधानं नावकल्पते. न हि प्रदीपसहस्रस्य यावान् प्रकाशस्तावानेकस्य प्रदीपस्य भविष्यति। सामर्थ्यस्य च वैषम्ये तु भवत्येव, यावत् खलु खद्योतसहस्रस्य तेजस्तावदेकस्यापि प्रदीपस्य। अथ केषांचिदेव तर्हि—

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः।
यच्चाभिरुचितं नाम तत्सर्वार्थेषु योजयेत्॥

इति श्रीविष्णुधर्मगतवचनविरोधः, अन्येषामानर्थक्यं च तदवस्थमेवेति।

## तत्र सिद्धान्त·

अत्राभिधीयते—सर्वेषामपि भगवन्नाम्नां प्रत्येकमेतादृश सामर्थ्यम्। न च नरकसृष्टेरानर्थक्यं दग्धेऽपि कथचित्प्राचीने पाप्मनि तदुत्तरकालभाविभिरंहोभिर्महदवमानैश्च नरकपातस्यापि संभवात्।न चावृत्तिगुणकमेव कीर्त्तनं सर्वस्यापि भविष्यतीति कश्चिदस्ति नियमः। अत एव भरतदेवस्यापि ऋषभदेवेनानुगृहीस्यातापि प्रतिबद्धापरोक्षानुभवत्वादन्तरायैरत्यन्तसमुच्छिन्नभगवदुपासनत्वाच्च तदुत्तरकालभाविना मृगासवितरूपेण कर्मणा निकृष्टदेहारम्भः, अथवा मृगत्वमपि तज्जातिस्मरणवैराग्यभूतदयादिगुणोपेतत्वान्मोक्षानुकूलनेवेति न तदारम्भरकस्य कर्मणो निवृत्तौ प्रयतते भक्तिः। जयविजययोश्च वैकुण्ठवासिनोऽपि ब्रह्मविदवमानादधःपतनम्, ब्रह्मविदवमानजनितं हि दुरितं दुरत्ययं भगवदुपासनेनापि भगवद्भक्तावमानजनितं च। प्रपञ्चितं चैतत्तृतीयस्कन्धे—

सोऽहं भवत्समुपलब्धसुतीर्थकीर्ति
छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ।

इत्यादिना । नवमे चाम्बरीषोपाख्याने—

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥

इत्यादिना । वेनस्य तु भगवन्निन्दाप्रतिबद्धसामर्थ्यं सकृत्कीर्तनमावर्त्यमानमपि न पापक्षयायालम्, शिशुपालादीनां पुनर्निर्भरवैरानुबन्धपरिकल्पितसंपदः समाधेरिव निन्दादोषस्यापि दग्धत्वात् पुरुषार्थप्राप्तिरिति स्वयमेव सप्तमाद्ये समर्थित श्रीशुकेन ।

यदप्युक्तम्—एकेनैव पुरुषार्थसिद्धेरन्येषामानर्थक्यमिति, तदप्ययुक्तम्, पुरुषभेदेन सर्वेषामपि पुरुषार्थसाधनत्वोपपत्तेः ।

यत्तु समानमहिम्नां समाहारे तत्तन्महिम्नामपि समाहारान्नैकस्य तादृशो महिमेति, तदपि परिच्छिन्नप्रभावेषु प्रदीपादिषु घटते, न पुनर्निरंकुशमहिमसु भगवन्नामसु । न खलु चिन्तामणीनां निचयस्य, एकस्य वा चिन्तामणेः, कल्पशाखिनां वनस्य, एकस्य वा कल्पशाखिनः, कामधेनूनां यूथस्य, एकस्या वा कामधेनोः कश्चिदस्ति विशेषः ।

समाहृतानामुच्चारणमपि नानर्थकं संस्कारप्रचयहेतुत्वाद् एकस्यैवोच्चारणप्रचयवत् । तस्माच्छ्रद्धाभक्तिज्ञानवैराग्याभ्यासदेशकालविशेषादिनिरपेक्षं भगवन्नामकीर्तनमेव महदवमानातिरिक्तमप्रारब्धं प्राचीनमंहः सर्वमेव संहरति । आवर्त्यमानं पुनर्दुर्वासनाविध्वंसद्वारेण श्रद्धाभक्तिवैराग्यज्ञानान्युत्पादयदपवर्गसाधनम्, प्रारब्धपापनिवर्तकं च कदाचितुपासकेच्छावशात् । महदवमानस्य तु भोग एव निवर्तकस्तदनुग्रहो वा, न पुनरन्यत् किञ्चिदिति स्थितम् ।

## स्मार्तप्रायश्चित्तवैयर्थ्याशङ्कानिरसनम्

नन्वेवं पुराणार्थे परिगृह्यमाणे स्मृतीनामत्यन्तबाध एव स्यात्, न च तदुचितम्; पुराणैरेव तदर्थस्याप्यङ्गीकारात् ।

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः । इत्यादिभिः ।

तत्र समाधिः—एकत्रैव प्रवृत्तिनियमोऽन्यत्र प्रवृत्तिं प्रति—बध्नाति, न च कीर्त्तने प्रवृत्तिनियमः; अश्रद्धोपहतत्वात् प्रायेण पुरुषबुद्धीनाम्, साङ्केत्यनिबन्धना प्रवृत्तिर्न नियन्तुं शक्यते; तस्माद—सत्येवावकाशः स्मृतीनाम् । दृश्यते च सुकरदुष्करयोर्विकल्पो वैद्यकेषु तत्र च किञ्चित्सुकरमपि कस्मैचित्स्वभावादेव न रोचते, अतस्त—दर्थं दुष्करमपि चिकित्सान्तरं विधीयते; तद्वदिहापि दुर्वारदुर्वास—नावासितचेतसः प्रायेण पराङ्मुखा एव पुरुषोत्तमात्पुरुषाः; तदर्थं प्रायश्चित्तान्तरविधानम् ।

## स्मार्तपौराणयोर्विकल्पस्य प्रतिपादनम्

अत्र यत् कैश्चिदुच्यते—एकापूर्वप्रयुक्तमनेकमेकं दृष्टमुपकारं कुर्वद् विकल्प्यते यथा व्रीहियवादयः, स्मार्त्तपौराणयोः पुनरपूर्व—भेदाददृष्टार्थत्वाच्च न विकल्प इति । तत्र च वक्तव्यम्—विकल्प—निराकरणेन किमनयोः समुच्चयः ? साध्यते किं वा व्यवस्था ? किं वान्यतरस्यासाधनत्वम् ? समुच्चयव्यवस्थे तावन्निराकृते, अन्यतरस्या—साधनत्वेऽपि तावन्नामकीर्त्तनस्य नासाधनत्वं तत्परत्वात्पुराणानाम्, अतः स्मार्त्तस्यासाधनत्वमेव परिशिष्यते, न च तस्याप्यसाधनता, एकापूर्वप्रयुक्तानामेव विकल्प इति नियमाभावात्, लौकिकानाम—श्वशिबिकादीनामपि गमने विकल्पदर्शनाद्, भावार्थभेदेऽपि दाहच्छेदादीनां चिकित्सायाम् । न च दृष्टार्थानामेव विकल्पः, अदृष्टार्थयोरपि ग्रहणाग्रहणयोस्तद्दर्शनात् । अथ तत्र विरुद्धसमुच्चया—योगाद्विकल्पस्तर्हीहापि निरपेक्षासाधनसमुच्चयायोगाद्विकल्प एव ।

अपि च—अनेकापूर्वप्रयुक्तानामपि क्रममुक्त्यर्थानां शाण्डि—ल्यदहरादिविद्यानां विकल्पो दृश्यते, न च वाचनिकोऽसाविति वाच्यं वादीनामश्रवणात्, तस्मात्तुल्यार्थत्वमेव विकल्पे प्रयोजकं नान्यत् । न च दर्शपौर्णमासज्योतिष्टोमादिसाध्यस्वर्गभेदवदेकस्य पापस्य विनाशव्यक्ति-

भारोऽस्ति, येन ब्रह्महा द्वादशाब्दानि चरेद् ब्रह्महा हरिं कीर्त्तयेदित्य-नयोरपि भिन्नत्वाद् विकल्पः । तस्मादबाधितार्था । एवस्मृतयः । न चाविदुषः कर्मानुष्टानायोगवदकृताधानस्योत्तरक्रतुकरणायोगवच्चा-कृतभगवत्कीर्त्तनस्य प्रायश्चित्तान्तरासंभवः, येन विद्वद्वाक्यवत् 'पूर्णाहुत्या सर्वान् कामानवापनोति' इति वाक्यवद्वा । कीर्त्तनविषयाणामपि वाक्यानामानर्थक्यादर्थवादत्वमाश्रीयेत । तस्माद्यथाश्रुत एवार्थः पुराण-वचनानामुदाहृतानामिति ।

## अस्य प्रकरणग्रन्थस्य प्रयोजननिरूपणम्

ननु यदि विनैव श्रद्धां कीर्त्तनादेव पापक्षयस्तर्हि किमस्य प्रकरणस्य प्रयोजनम् ? अनेन हि श्रद्धैव साध्यते ।

सत्यम्, अपगतेऽपि पापे मनोगतमश्रद्धानिबन्धनं दुःखं न निवर्तते, ततस्तदपगमलक्षणाय मनःसमाधानाय प्रकरणमेतदिति प्रकरण-स्य प्रयोजनम्, तस्मात्सर्वमनवद्यम् ।

श्रीरामेति जनार्दनेति जगतां नाथेति नारायणे-
त्यानन्देति दयाधरेति कमलाकान्तेति कृष्णेति च ।
श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहु
र्मुह्यन्तं गलदश्रुधारमवशं मां नाथ नित्यं कुरु ॥ १ ॥

यदङ्कमालोकितुमाशु धावतांमुकुन्दयात्रोत्सवमोक्षितुं च यत् ।
न तच्च तच्च स्खलितं समं सतामतो न लज्जास्खलतामपीह नः ॥२॥

अपि च—

सुरसरित इव महाचलगहनगुहाजाड्यजालभेदिन्याः ।
हरिचरणजन्मभूमेः स्खलितमपि कृतेरलङ्कृतिर्ननु नः ॥३॥

अथ वा—

हरिभक्तिराजमार्गे गुरुपदनखचन्द्रिकाधौते ।
श्रुतिजननोपदपद्धतिमनुसरतां नः कुतः स्खलितम् ॥ ४ ॥

धर्मः संविद्विषयविरतिः सिद्धयश्चाणिमाद्या
यस्य श्रीमच्चरणनलिनद्वन्द्वपीठे लुठन्ति ।
यस्योन्मेषः सकलभुवनाम्भोजराजोनिमेषः
सोऽस्मत्स्वामी जयति जगतां मङ्गलं यस्य नाम ॥ ५ ॥

अपि च—

स्वपादपङ्केरुहसीकरस्य निमज्ज्य माहात्म्यमहार्णवे यः ।
दधौ पुनस्तं स्वयमेव मौलौ स नो गुरुस्तत्कुलदैवतं नः ॥६॥

यदङ्घ्रिनखमण्डलाद्गलितस्य पूर्वं पुन-
र्यदीयकबरीभरार्णवमुपेयुषः पाथसः ।
अशेषजगदंहसां किमपि नाम निर्णेजनं
दयामृतमहाम्बुधेः किमुत नाम तस्यैव तत् ॥७॥

नाधाय किञ्चिदपनीय न किञ्चिदन्तः
स्वात्मैव येन सुखसिन्धुरगाधबोधः ।
आविष्कृतः करुणया करवै किमस्य
तन्नाम्नि मग्नमिदमेव मनोऽस्तु पूजा ॥ ८ ॥

झटिति जगतामंहस्तूलं दहद्दहनो महद्-
दहरकुहरध्वान्तं ध्वंसं नयन्नभसो मणिः ।
किरणलहरी चान्द्री चेतश्चकोरचमत्कृति-
र्भवतु भवतां नामज्योतिर्मुदे मदनद्रुहः ॥ ९ ॥

कृष्ण कृष्ण मधुसूदन विष्णो कैटभान्तक मुकुन्द मुरारे ।
पद्मनाभ नरसिंह हरे श्रीराम राम रघुनन्दन पाहि ॥१०॥

इति श्रीमदनन्तानन्दाचार्यपादपद्मोपजीविनः श्रीमन्नृसिंहसूनो
लक्ष्मीधरस्य कृतौ भगवन्नामकौमुद्यां नामकीर्तनस्य
केवलस्यैव पुरुषार्थसाधनत्वप्रतिपादनं नाम
तृतीयः परिच्छेदः । समाप्तोयं ग्रन्थः ।

# श्रीभगवान्नम कौमुदी का शुध्दि पत्र

| पृष्ठ | पङि्त | अशुद्ध | शुद्ध |
|---|---|---|---|
| | ६ | आकृष्टि | आकृष्टिः |
| १ | १० | संहृदरखिलं | संहरदखिलं |
| १ | ११ | जकामिनी | व्रजकामिनी |
| ३ | १३ | चार्य्यैरेव | चार्य्यैरेव |
| ३ | १८ | प्रननुवाद | पुनरनुवाद |
| ४ | २ | तार्थत्मे | तार्थत्वमे |
| ४ | ३ | णामपि | णानामपि |
| ४ | ८ | वैध | वैद्यं |
| ४ | १५ | मविष्मो | भविष्यो |
| ४ | १८ | प्रह्मात्मा | ब्रह्मात्मा |
| ४ | १? | प्रह्मात्म | ब्रह्मात्म |
| ५ | ४ | समत्तं | स्मार्त्तं |
| ६ | २३ | अथवाद | अर्थवाद |
| ६ | ७ | मधायीत | मधीयीत |
| ६ | १० | श्रते | श्रुते |
| ६ | १८ | मुह्ह | मुह्ह |
| ६ | १६ | मुह्य | मुंह्य |
| १० | ६ | खनन्या | खनन न्या |
| ११ | २ | उपलभ्ते | उपलभ्यते |
| १४ | ६ | संभवोवीति | संबो भवीति |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १६ | ११ | हौष्कल्यम् | पौष्कल्यम् |
| १६ | १२ | उच्यतु | उच्यते |
| १६ | १३ | पेंत्त्य | पेक्ष्य |
| १६ | १५ | गुद्दीश्यमाम | गुद्दिश्यमान |
| १६ | १७ | क्ते | भक्तेः |
| १६ | १७ | कवल्ये | कैवल्ये |
| १६ | २१ | करण्सो | करण्यो |
| १६ | २४ | प्रसल्येत | प्रसज्येत |
| १८ | १८ | तत्तुनः | तत्पुनः |
| २० | १७ | संकारः | संस्कारः |
| २० | २३ | चाङ्करा | चाङ्कुरा |
| २२ | २३ | क्रत्वर्थ | क्रत्वर्थ |
| २५ | १२ | प्राश्चित्ता | प्रायश्चित्ता |
| ३० | १३ | नादरे | नादरेण |
| ३० | १३ | निरकुश | निरङ्कुश |
| ३२ | २४ | स्मृतः | स्मरतः |
| ३३ | १२ | विशेषणम | विशेषणम् |
| ३३ | १२ | सुख | सुखं |
| ३३ | १६ | प्रार्थित | प्रार्थित |
| ३४ | २ | देवाना | देवानां |
| ३४ | ६ | संधिशुया | सन्धिशून्या |
| ३४ | १५ | ज्ञनमिव | ज्ञानमिव |
| ३५ | १४ | वरसत | स्वरसत |
| ३८ | ४ | बिदेदादि | निर्वेदादि |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| ३९ | ९ | प्रवृष्टः | प्रकृष्टः |
| ३९ | १५ | षेकातित्रमो | षेधातिक्रमो |
| ३९ | २० | मक्तोऽम | मक्ताऽय |
| ३९ | २३ | श्रोऽनुपादेय | अतोऽनुपादेय |
| ४० | १४ | हरेर्नापदे | हरेर्नामपदे |
| ४२ | १० | तद्रथ | तदर्थं |
| ४२ | १९ | शासन-शिव | शासनं शिवं |
| ४२ | १९ | मङ्गल | मङ्गलं |
| ४३ | ४ | प्राश्चित्त | प्रायश्चित्त |
| ४४ | १२ | विक्रश्य | विक्रुश्य |
| ४४ | १४ | गुणम | गुणकर्म |
| ४४ | २४ | स्मनि | स्मृति |
| ४६ | ३ | स्मृतिना | स्मृतिनां |
| ४६ | १८ | वच म् | वचनम् |
| ४६ | २२ | पहिमाण | परिमाण |
| ४७ | २३ | अत-अतः | त्वेऽस्ति-त्वेऽपि |
| ४८ | १२ | कत्वे | पकत्वे |
| ४९ | ५ | फकल्पना | परिकल्पना |
| ४९ | १४ | रनु यात् | रनुदयात् |
| ५० | ५ | मावैक | मावैक |
| ५० | २० | तिक्षयमृद्दिशय | तिशयमुद्दिश्य |
| ५१ | १४ | एव | एवं |
| ५१ | १९ | शादान्न | शब्दान्न |
| ५२ | ४ | वामिनः | स्वामिनः |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५२ | ४ | म | न |
| ५२ | ६ | पन्नहिते | पन्ना हि ते |
| ५२ | ८ | नन्नि: | तन्नि: |
| ५२ | ८ | दृशा | दृशां |
| ५२ | ११ | पूतैप्यति | पूतेरप्यति |
| ५२ | १४ | पादशूलं | पादमूलं |
| ५२ | १७ | पराशह्र | पराशर |
| ५२ | १८ | हेतुनां | हेतूनां |
| ५३ | ५ | त मा | तस्मा |
| ५३ | ६ | पुरान् पुरुष य, | पुमान् पुरुषस्य |
| ५३ | ६ | वरुपं | स्वरुपं |
| ५३ | ७ | वरुवेण | स्वरूपेण |
| ५३ | १७ | सवषा | सर्वेषा |
| ५४ | १६ | दर्शः नात् | दर्शनात् |
| ५४ | १६ | कीर्त्त अस्या | कीर्त्तनस्या |
| ५४ | २१ | पावत्वम् | पावनत्वम् |
| ५५ | ४ | विधाकं | विधायकं |
| ५ | १० | त श्रेयान् | तत्र श्रेयान् |
| ५५ | १० | पुनर्थं | पुनरर्थं |
| ५६ | ३ | विषज्ञाना | विषयज्ञाना |
| ५६ | ७ | सवुत् | सकृत् |
| ५६ | ११ | न न | न |
| ५६ | १२ | त हि | न हि |
| ५६ | १३ | वर्त्तमना | वर्त्तमान |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| ५६ | १५ | अहि | अपि |
| ५६ | १६ | स योपायः | तस्योपायः |
| ५६ | २४ | स्महिम्नैव | स्वमहिम्नैव |
| ५७ | २३ | नुतस्याधिकारा | नुतप्तस्याधिः |
| ५७ | २५ | पपक्षयो | पापक्षयो |
| ५७ | २६ | काम यापि | कामस्यापि |
| ५८ | १६ | कीत्न | कीर्त्तन |
| ५६ | ७ | विवक्षित | विवक्षिता |
| ६० | १३ | इत्त्रापि | इत्यत्रापि |
| ६० | १६ | किल्विष तस्म | किल्विषं तस्मै |
| ६२ | ५ | वक्षत | वक्षितं |
| ६२ | १६ | तनश्चा | ततश्चा |
| ६४ | ४ | नक्त | नक्तं |
| ६४ | ८ | सत्य | सत्यं |
| ६४ | १६ | अ चय | अपचय |
| ६४ | २० | भगवति | भगवती |
| ७० | ५ | पराण | पुराण |

न्तःकरणेनावच्छेद्यत्वोपपत्तौ षड्भावविकाररहिते नित्यनिरनिष्टे ब्रह्मणि परिणामादिविकारप्रसङ्गात् । गगनादौ ते ते विकाराः श्रुतिसिद्धतया सन्तोप्याश्रयस्य गगनादेर्नीरूपत्वादतिसौक्ष्म्याच्च चक्षुषानुपलब्धा अपि प्राणान्तरेणोपलभ्यन्ते । त्वन्मते तावद्गगनादौ मिथ्यात्वसाध्यव्याप्त्यर्थं जडत्वपरिच्छिन्नत्वदृश्यत्वसावयवत्वादिसमर्थनात् । अन्यथा ब्रह्मणीव तस्मिन्नप्यबाध्यत्वप्रसङ्गाच्च । गगने स्वाभाविकैरेव प्रदेशैर्घटाद्युपाधिसम्बन्धोपपत्तावपि पूर्वमेव निराश्रयैर्मायाद्युपाधिभिः स्वभावतो निःप्रदेशे ब्रह्मण्यपूर्वतया प्रदेशसम्पादनस्यैवाशक्यत्वात् । उपाधेरुपधेयेन समानसत्ताकत्वानियमान्न घटाकाशादेर्विरोधः । प्रकृते तु मायाब्रह्मणोर्विषमसत्ताकयोर्विरोध एव । अस्तु वा तथाप्यन्तःकरणाद्युपाधिना यतश्चैतन्यमवच्छिद्यान्यतो नीयते तत्र शून्यस्योपाधिस्थितौ चान्यत्र द्विगुणीकृत्य तत्रैवोपाध्यन्तरसमवधाने च त्रिगुणीकृत्य पुनरुपाध्यन्तरसमागमे चतुर्गुणीकृत्य चित्तौ वृत्तेश्च प्रसङ्गात् । न चेत्केवलस्योपाधेरेवान्यतो गमने कृतनाशस्याकृताभ्यागमस्य च प्रसङ्गात् । न च सर्वोपाधीनामेकत्र स्थितत्वेनैकत्वात्तदुपहितचैतन्यखण्डानामप्येकत्वापन्नत्वान्नैष दोष इति वाच्यम्, तत्तत्पुण्यपापानामप्येकत्वभावप्रसङ्गेन प्रतिकर्मव्यवस्थाभङ्गस्य चितौ वृद्धेश्च प्रसंगात् । ब्रह्मणो निरवयवत्वादाकाशवायुजलादिविलक्षणत्वाच्चाकाशवाय्ववयवाहरणवद् व्यजनादिना घटादिना चावेकदेशाहरणवदन्तःकरणादिना ब्रह्मैकदेशाकर्षणासम्भवेन विभुत्वात् सम्पूर्णाहरणस्याप्यसम्भवात् । यदि गगनं निरवयवं मतं तदापि घटादिना तदवच्छिद्या हरणस्याशक्यत्वात्तद्दृष्टान्तासम्भवात् ।

किञ्च सचेतनशरीरे कुत्रचिदेककण्टकादिवेध इव ब्रह्मणि चेतने सर्वत उपाधिवेधे वेदनाया न केनापि परिहारात् । तस्य वेदनाया अननुभवे तु जडत्वप्रसंगाच्च । यदि चोपाधिना ब्रह्म नैवावच्छिद्यते तदा तव कल्पितस्य शास्त्रस्य व्यवहारदशायामप्यप्रामाण्यप्रसंगात् । त्वया हि सत्यप्येकाकिन्यद्वितीये ब्रह्मण्यनादिमायाख्योपाधिभेदभिन्नेश्वर-

जीवभेदजीवजीवभेदविषयतयेष्टानिष्टमार्वज्ञाल्पज्ञत्वादिना सह बन्ध-मोक्षमुमुक्षादिव्यवस्थाया वेदवाक्यैरेव बोधनाङ्गीकाराच्च। उपाधिभि-र्ब्रह्मण्यवच्छेद एवानेककोट्यन्तःकरणराशिभिरवच्छिद्यमाने ब्रह्मणि शून्यप्रसङ्गस्य यद्यप्यनन्तत्वाद् ब्रह्मणस्तथाप्यन्तःकरणानामप्यनन्तत्वा-न्निरवच्छिद्यमानस्यापि तस्य पृथिव्यादिरिव परतः स्वस्माद्वा पुनः पूर्त्तौ शून्यप्रसङ्गाभावेपि निरन्तरं परिणामित्वप्रसङ्गस्यानन्तक्लेशभागित्व-प्रसङ्गस्य चावारणात्।

किंच शास्त्रादिना देहात्परिच्छिन्न विस्रस्तदेहावयवावच्छेदेनात्मनि वेदनाया अननुभवस्य देहादविस्रस्ततादृशदेहावयवावच्छेदेनानुभवस्य च सार्वलौकिकत्वात्। त्वया तूपाधिगता ब्रह्मणो विस्रस्ता ब्रह्म-भागा एव जीवाः क्लेशभागिनो न ब्रह्मेति विपरीताभिमननात्।अनु-भवितृत्वस्य च ब्रह्मणि ज्ञातेपि "विज्ञातारमरे केन" "न हि द्रष्टु" "नान्योतोस्ति द्रष्टे" त्यादिश्रुतिसिद्धत्वात्। तस्मान्न केनापि ब्रह्मण्य-नेकानर्थापरिहारात् प्रकाशमात्रस्य तस्य मायाधिष्ठानत्वं निरधिष्ठान-भ्रमस्य चामायावादतः सिद्धं वियदादावनध्यस्तत्वेन।

इत्यानन्दभाष्यकार भगवद्रामानन्दाचार्य पादापद्मोपजीविना
श्रीकीलद्वारपीठसंस्थापकेन जगद्गुरु–
श्रीकीलदेवाचार्येण विरचितेऽध्यास-
ध्वसलेशेऽधिष्ठानभंगो नाम
तृतीयः परिच्छेदः ॥३॥

## अथ चतुर्थः परिच्छेदः

अत एव प्रतिविम्बवादोप्यविचारित एव साधुः। तथा हि प्रतिविम्ब-स्य बिम्बैक्य प्रत्युपाधिवाधस्याप्रयोजकत्वात्। विम्बापसरणान्यव्यव-धानादिमात्रेणापि तस्य तदैक्यदर्शनात् घटस्य जलादौ प्राक्

प्रतिबिम्बितस्य पश्चात् खण्डान्तरस्थितस्य मेघाद्यन्तरितस्यापि चन्द्रस्य तत्र तथैव प्रतिबिम्बसद्भावप्रसङ्गाच्च ।

किं च यथैकस्मिन्साम्बुघटाद्युपाधाविन्दुप्रतिबिम्बसत्त्वेपि तारकातडिदादिप्रतिबिम्बस्यापि सम्भवदर्शनेन तथैकस्मिन्नप्यन्तःकरणोपाधावेकप्रतिबिम्बसद्भावेपि तत्र प्रतिबिम्बान्तरभवनवारकाभावात् । प्रत्यन्तःकरणं तत्र प्रतिबिम्बितचैतन्यैकत्वनियमस्याप्यशोभनत्वात् । यथा च मायायां प्रतिबिम्बितचैतन्यस्येश्वरस्यान्तःकरणेषु प्रतिफलनसम्भवेन तथा प्रत्यन्तःकरणं तत्र प्रतिबिम्बितचैतन्यस्यैककस्यापि पुनः प्रत्यन्तःकरणं प्रतिफलनस्य युक्ततया प्रत्यन्तःकरणं तत्तत्प्रतिबिम्बचैतन्यसंक्रमणाभावात् प्रतिकर्मव्यवस्थोच्छेदापाताच्च । न च प्रतिबिम्बस्य पुनः प्रतिबिम्बाभावान्न तत्संक्रमणमिति वाच्यम् । मायागतचैतन्यप्रतिबिम्बस्यैवमन्तःकरणेषु प्रतिबिम्बाभावप्रसङ्गात् । जलादर्शादिस्थनभोमणिप्रतिबिम्बस्य पुनर्भित्त्यादावपि प्रतिबिम्बदर्शनाच्च । उपरिस्थस्याव्यवहितस्यैव बिम्बस्य प्रतिबिम्बसम्भवो नान्यथेति नियमस्यापि नातीवसङ्गतत्वात् । अन्यथा मायया व्यवहितेश्वरचैतन्यस्य स्थूलेलादिभूतसंघातेन च व्यवहितान्तःकरणेषु प्रतिबिम्बस्यैवासम्भवापातात् । सर्वात्मकतया व्यापकस्य तस्योपर्यधोभावाद्यभावात् । त्वयान्तःकरणगतप्रतिबिम्बचैतन्यस्य घटादावपि वृत्तिद्वारकप्रतिफलनस्वीकाराच्च ।

किञ्च वृत्तौ वा वृत्तिद्वारा घटादौ वान्तःकरणचैतन्यप्रतिबिम्बनस्यानुचितत्वात् तस्यान्तःकरणेष्वीश्वरप्रतिबिम्बने मायायां शुद्धप्रतिबिम्बने चाभावात् । न चेश्वरस्य सदा सर्वत्रापरोक्षमेवास्तीति न वृत्त्यपेक्षेति वाच्यम्, शुद्धे तद्भावात् । न चान्योन्यान्तःकरणेषु प्रतिबिम्बनेनापि तत्तच्चैतन्यानामेकीभावसम्पत्तेर्न विरोध इति वाच्यं प्रतिकर्मव्यवस्थाभङ्गस्य तादवस्थ्यात् । तदेतद्दोषपरिजिहीर्षया केषामनेकाभावपक्षेत्वनेकेश्वरभावपक्ष इव कश्चित्सुप्सति कश्चिज्जिग-

मिषति कश्चिद्बुभुक्षति कश्चित्मुमुक्षति कश्चिद्रिरंसति कश्चिच्च जिग्लायिषतीत्यादि विरूद्धधर्माश्रयणाच्छरीरस्थितिप्रवृत्त्यभावस्य तदुपाधेरेकत्वादुपाधिगतानां सुखदुःखजन्ममरणादिविकाराणां तेष्वविशेषस्य च प्रसंगेन प्रतिकर्मव्यवस्थाभंगस्य पुनस्तादवस्थ्यात्। एकजीवपक्षे साम्प्रतप्रत्यक्षादिसंवृत्तसुखदुःखादिव्यवस्थाविरोधस्य जगरूकत्वात्। तदनेकपक्षेऽपि तेषां विभुत्वे सर्वोपाधिसम्बन्धसाधारण्यानपायात्। सांसारिकमर्यादाविरोधस्यतथैवस्थितत्वात्। एतद्दोषस्य तार्किकमतेपि दीयमानत्वात्तन्मत आत्मभेदस्थानौपाधिकत्वविशेषाच्च।

किञ्चैवं तत्तदन्तःकरणानां तत्तदात्मभेदेषूपाधित्वानुपपत्तेः। न हि देशकालयोर्भेदे पर्वतादिरुपाधिरात्माकाशयोश्च भेदे घटादिरुपाधिरस्ति घटादिध्वंसेपि तद्भेदानां प्रमाणसम्प्रतिपन्नत्वात्। चन्द्रप्रतिबिम्बदृष्टान्तवैरूप्याच्च। न हि घटाद्यम्बुस्थमनेकयोजनचन्द्रमण्डलप्रतिबिम्बं बिम्बपरिमाण नापि घटाकाशो विभुः। अणुत्वेप्यणुत्वं प्रत्यन्तःकरणस्याप्रयोजकत्वात्। महत्यपि सागराद्युपाधाविन्दुप्रतिबिम्बस्यात्यल्पतयैव तथांगुष्ठपर्वपरिमितदीपादिबिम्बप्रतिबिम्बस्य च स्फटिकभित्त्यादावतिदैर्ध्येण दर्शनात्।

किञ्चान्तःकरणपरिमाणपरिमितज्ञप्त्येकस्वरूपस्य प्रतिबिम्बात्मनः सर्वशरीरावयवावच्छेदेन सुखाद्यनुसन्धानानुपपत्तेः। न च मनोद्वारा तदुपपत्तिः स्वाधीनप्रतिबिम्बचैतन्यस्याणुभूतेन मनसान्यत्रनयने स्वशरीरे प्रेतत्वस्य स्वशरीरे एवावयवादैक्येवान्तरं प्रतिनयने च तदन्यसर्वावयवेषु प्रेतत्वस्य प्रसंगात्। अनुभूयते च मनो मेन्यत्राभून्नाहमेतदवेदिषमिति "शरीरं यदवाप्नोती" त्यत्रात्मना प्राणेन्द्रियादीनां सहैव नयनोक्तेस्तत्र प्रेतत्वस्य स्थैर्याच्च मनसा तदनयने च निरुपाधिकस्य तस्य तदानीमेव मोक्षप्रसंगात्। मनस एवान्यत्र गमनेऽपि तदन्यतन्मोक्ष-

प्रतिबन्धकपक्षे मनस्तदुपाधित्वानुपपत्तेर्यत्तन्मोक्षप्रतिबन्धकं तस्यैव तदुपाधित्वौचित्याच्च ।

किञ्च प्रतिबिम्बस्योपाधिसत्ताधीनसत्ताकत्वनियमस्तथैव प्रतिबिम्बे बिम्बव्याप्त्यनुगुणोपाधिव्याप्तेरुपाधिसत्ताकपूर्वं प्रतिबिम्बसत्ताया एवाभावात् "तन्मनोसृजदि" ति श्रुत्या त्वयैवान्तःकरणस्य सादित्वसाधनाच्च । तदुपाधिकप्रतिबिम्बचैतन्यस्यानादित्ववादविरोधात् । वस्तुतश्चन्द्र इव तत्प्रतिबिम्ब आह्लादकत्वादिगुणाभावात् प्रतिभासमात्रत्वमेव यथा न तथा जीवे प्रतिभासमात्रत्वं विधिनिषेधशास्त्रस्य तदधिकार्यभावाद्वैयर्थ्यापातात् । अन्यथा जलादर्शादिप्रतिपन्नपुरुषप्रतिबिम्बच्छायादेरपि तदधिकारप्रसङ्गात् । न हि ज्योतिःशास्त्रं यथेन्दुविषयं तथा तत्प्रतिभासविषयं नापि तस्य चन्द्रैक्यविषयं यथा "तत्सृष्ट्वा तदेवानुप्राविशदि" ति श्रुत्या परमात्मनः स्वकार्यवर्गे साक्षात्प्रवेशप्रतिपादनं न तथा कुत्रापि चन्द्रमसः स्वप्रतिबिम्बविषये साक्षात्प्रवेशप्रतिपादनम् । नापि "यतो वा" इति श्रुतौ यथा ब्रह्मण आकाशादिभूतजातं कार्य्यं न तथा चन्द्रस्यापि जलादिकार्यं येन तस्मिन्ब्रह्मण इव तस्यापि प्रवेश उपपद्येत । जलस्थचन्द्रश्रुतिस्तु तत्तदात्मकतयानुप्रविश्य तत्र तत्र साक्षादवस्थितस्य परमात्मनस्तत्तदाधातृत्वादि सम्बन्धप्रयुक्तदोषगन्धसंसर्गाभावपरतया मतान्तरे तत्तदन्तर्याम्यभेदपरतया वान्यथैवसिद्धत्वात् । "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मे" त्यादिश्रुत्यानुगुण्यात् । "न स्थानतोपि परस्योभयलिंगं हि" "सर्वत्र असंगो ह्ययं पुरुषः एष आत्मापहतपाप्मा विजर" इत्यादिनैकार्थ्याच्च । न ह्येवं प्रतिबिम्बपक्षे सम्भवद्युक्तिकोयमात्मनि दोषासंश्लेषः । त्वया हि गुणदोषौ व्यवस्थापयता यावद्दोषाश्रयतया प्रतिबिम्बपक्षपरिग्रहात् ।

किं चान्तः प्रविष्टः शास्तेत्यनया श्रुत्यान्तःप्रविष्टस्यैव सर्वजनशासितृत्वधारकत्वादेः साक्षादभिधानान्न हि प्रतिबिम्ब उपाध्येकोपलब्धिप्रवृत्तौ स्वोपाधिशासितृत्वाद्यपि सम्भवत् प्रमाणक "भूतभर्तृ च

ग्रसिष्णु प्रभविष्णु चे" त्यादि स्मृतिविरोधश्च । अन्तःप्रवेशस्तु तस्य "अनेन जीवेनात्मनानुप्रविश्ये" ति श्रुत्यनुरोधनेन त्वया जीवरूपेणैव-वक्तव्यः । न ह्येकस्मिन्नन्तःकरणे चैतन्यद्वयप्रवेशस्तव काञ्चिद् गुण-दोषव्यवस्थां निर्वहति । "एक एव हि भूतात्मे" ति प्रतिबिम्बश्रुतिवि-रोधात् । एकत्रैव स्थितयोर्बिम्बप्रतिबिम्बीभावादर्शनाच्च । "गुहां प्रवि-ष्टावात्मानौ हि तद्दर्शनात्" "गुहां प्रविष्टौ परमे" "छायातपौ ब्रह्म-विदो वदन्ती" ति सूत्रश्रुतिप्रामाण्याज्जीवस्येश्वरछायारूपत्वे तूपाधेः प्रतिबिम्बपक्षपातित्वाभावप्रसंगात् । छायायास्तमो द्रव्यत्वेन सर्वतोमुखे तमसि भास्वरद्रव्यसन्निधानेन विनाविशिष्य सर्वतःप्रसारिणि च भास्वर-द्रव्ये विरोधादेव स्वरूपत एवाग्रहात् । "अछायमि" ति तच्छायानिषेध-विरोधाच्च न हीश्वर भास्वरद्रव्यसन्निधानं नापीश्वरो भास्वरद्रव्यं नापि तस्मिन्नातपशब्दमुख्यार्थत्वमातपशब्दार्थस्य च छायाया अभावात् छायि-ना यद्यत्करणं छायायापि तत्तत्करणाच्च न हीश्वरेण यद्यत्करणं जीवे-नापि तत्तत्करणम् । नापि छायाछायिनोरैक्यं शक्यशंकम् । "अत्रायं पुरुषः स्वयंज्योतिरित्यनेन जीवात्मन्यातपशब्दार्थत्वाभिधानविरोधश्च नापि छायायां सोपाधिकत्वम् । नापि छायायां सुखाद्यनुसन्धान-सम्भवः । नापि छायिन एकत्वे तच्छायाया अनेकत्वम् । नापि छायिनि परिमाणनियमसद्भावेपि छायाया अणुत्वादिपरिमाणनियमः । "तस्य भासा सर्वमिद विभाती" तिश्रुतेरीश्वरस्यैव भास्वरद्रव्यत्वे-विभोस्तस्य तदभावरूपाया छायायाः सुतरामसम्भवः । अलं छायाश-ब्देन प्रतिबिम्बोक्तौ भक्षितेपीति न्यायानुसरणात् । छायिप्रवेशे भुज्य-मानान्नपानादौ रसज्ञानवदवर्जनीयसन्निधितया छायाप्रवेशविधान-वैय्यर्थ्याच्च ।

किञ्च अभेदपूर्वयोरन्तःस्थयोरुभयोरुपाधिसम्बन्धित्वे विशेषाभा-वेन प्रतिबिम्बत्वान्यथानुपपत्ते र्बिम्बिनोऽन्यस्यैवानुपाधिस्थस्यैव वक्तव्य-

त्वात् । एकाकिनीं निर्विशेषां चितिं प्रत्येकस्यैवान्त:करणस्य विशेषणत्वोपाधित्वयोर्युगपद्विरोधाच्च । युगपदेकस्यैवोपाधेरेकस्यामेव चितौ भेदप्रयोजकत्वे तु मायाख्यैकोपाधिनैवोपाधित्वविशेषणत्वाभ्यामीश्वरजीवभेदसिद्धौ जीवत्वसम्पत्तयेन्त:करणाख्योपाधे: पृथक् स्वीकारवैयर्थ्यात् । उपाध्यन्त:स्थितस्य बहिर्बहि:स्थितस्य चोपाध्यन्त: प्रतिबिम्बननियमाभावे जीवेश्वरयोरविशेषणतदन्तरेव प्रतिफलने नान्योन्यबिम्बप्रतिबिम्बीभावस्य तदभावस्य वा पाताच्च ।

किञ्चान्त:करणप्रविष्टत्वेपीश्वरत्वे तस्य मायोपाधिकत्वाभावस्यापरिच्छिन्नमायोपाधीश्वरचैतन्यस्य विभुत्वात् तेन रूपेणाणीयस्यन्त:करणे प्रवेशासम्भवेनाणुरूपेण प्रवेशे विभुत्वभंगस्य च प्रसंगात् । न हि भवन्मतेन्त:करणप्रवेश इव तदप्रवेशोपि चेतने स्वाभाविकमणुत्वं मायाप्रवेश इव तदप्रवेशेपीश्वरत्वं वा विभोरेवान्त:करणप्रवेशनिमित्तकजीवत्वाणुत्वादेस्त्वयांगीकाराच्च । अन्त:प्रवेशेपीश्वरस्याजीवरूपत्वे अन्त:करणान्यस्यैव जीवत्वोपाधेर्जीवत्वेऽन्यदीयत्वस्य चापातात् । एकस्मिन्नेवैकस्यैवोपाधेर्युगपद्विरुद्धधर्माश्रयत्वहेतुत्वानुपपत्तेरुक्तत्वादेव अन्यथैकस्यामेव गोव्यक्तौ गोत्वस्य विशेषणत्वोपाधित्वाभ्यां गवेतरत्वगवेतरान्यत्वयोरेकस्मिन् देवदत्ते देवदत्तीयत्वस्य तद्वत् स्वकन्यां प्रति पितृत्वभर्तृत्वयोर्मैत्रे मित्रातनयत्वस्य तद्वद् युगपदेव वक्तृत्वमौनित्वयो — र्मन्तृत्वस्थातृत्वयोर्भोक्तृत्वाभोक्तृत्वयो साधुत्वासाधुत्वयो: सुखित्वदु:खित्वयोर्मित्रत्वशत्रुत्वयो: सुप्तत्वजागृत्वयोरन्धत्वानन्धत्वयोर्दण्डयत्वरक्षत्वयोरुपादेयत्वहेयत्वयो: स्वस्कन्धआरोह्यत्वानारोह्यत्वयोर्मनुष्यत्वामनुष्यत्वयोरेकस्यां चितावपि ज्ञानत्वाज्ञानत्वयोरानन्दत्वानानन्दत्वयो: प्रियत्वाप्रियत्वयो: सत्यत्वासत्यत्वयोश्च प्रसंगादलम् ।

किञ्च मायाया एकत्वेन तदुपाधिनश्चैतन्यस्यैकत्वमन्त:करणाना-

मनेकत्वात्तदुपाधिजीवचैतन्यानामप्यनेकत्वमित्युक्तत्वात् । त्वया तत्रैकस्याप्यन्तःकरणस्य मन आदि चतुर्भेदभिन्नत्वात् कथं न तद्गतप्रतिबिम्बचैतन्यस्यापि प्रथमतश्चतुर्द्धाचतुर्द्धाभेदभिन्नत्वं बहुशास्त्रा ह्यनन्ताश्चेत्यत्रैकस्या अपि बुद्धेरनेकभेदभिन्नत्ववत् मनश्चेतसोरपीत्येवं चतुर्द्धाचतुर्द्धाभेदभिन्नस्यापि तस्य पुनरनेकस्वोपाधिभेदभेदितभेदानेकत्वं स्यादेवबुद्ध्यादेर्भेदा अपि प्रतिक्षणमुत्पादशालिन इति ततस्तदुपाधिचैतन्यभेदा अपि तथैव स्युः । दृष्टश्च जलादिभेदे तद्गतेन्दुप्रतिबिम्बादेरपि भेदः । उपाधेः प्रतिबिम्बपक्षपातित्वात् । एवं च बाह्यैरप्यात्मत्वनिश्चयात् क्षणिकत्वेपि यत्क्षणिकं तन्नित्यं यथा जलदपटल इत्यनुमानेन तस्मिन्नित्यत्वसिद्धेश्च । यद्वाधिष्ठानचैतन्यविषयतया नित्यत्वं श्रुतेरविरोधात् । न चान्तःकरणस्य वृत्तिभेदेपि न तत्स्वरूपभेदो येनानिष्टप्रसजनमितिवाच्यं त्वयान्तःकरणस्य विषयाकारपरिणामस्यैव वृत्तित्ववचनात् । तत्परिणामे ततस्तदधीनशरीरास्थितिप्रवृत्तिप्रतिबिम्बपरिणामे बाधकाभावात् । त्वया पारमार्थिकभेदस्यैव कुत्राप्यपिस्वीकाराद्येन परिणामरूपौपाधिकभेदेन न स्वरूपभेद इति स्यात् घटः पटो न नेह घटोभविष्यति घटो घटोध्वस्त इत्यत्रापीदृशस्यैवभेदस्य त्वयातियत्नेन समर्थनाच्च । अतो न मन आदि भेदः प्रातिभासिकः पारमार्थिको वा । तथे "न्द्रियेभ्यः परं मनः मनसस्तु पराबुद्धिरि"तिस्मृत्या 'अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिरि" ति श्रुत्या ज्ञान पर्यायेषु मनसो यावान् मनसो ज्ञानहेतुत्वादहंकारविमूढात्मेत्यत्राहंकारस्य ज्ञानावरकत्वोक्त्या तदधिष्ठातृदेवताभेदाच्च । मनश्चेतसो. कुत्रचित्पर्यायेष्वभेदप्रतीतावपि बुध्यहंकार मनसांतु भेदस्यैव सिद्धेः । श्रुतौ कामादीनां मनोजन्यतया तेषु मनसाभेदोपचारस्यापि सम्भवात् ।

किञ्च प्रसिद्धं त्वया सुषुप्तावहंकारनाशं स्वीकुर्वता तत्सत्तैकससाकस्यप्रतिबिम्बचैतनस्य नाशाभ्युपगमात् । अन्यथा यस्य यदुपाधिकस्य यदैकोपाधिसत्तैकलब्धस्वस्वरूपसत्ताकस्य प्रतिबिम्बस्य तदेकोपाधिनाशेपि चितौ तस्य तदेकोपाधिकत्वमेव न स्यात् ।

अपि च प्रतिबिम्बउपाधिसत्तैकसत्ताकत्वनियमोपि यत्रोभयोबिम्बोपाध्योः समानसत्ताकत्वं तत्रैव । प्रकृतेन्तःकरणादावध्यस्ततया कल्पितताया अपि सत्तायास्त्वयानंगीकारात् कथं प्रतिबिम्बचैतन्येन्तःकरणसत्तैकसत्ताकत्वं तद्गतचित्प्रतिबिम्बेन्तःकरण सत्तानपेक्षसत्तान्तरस्वोकारेन्तःकरणबाधानपेक्षमोक्षत्वस्य प्रतिबिम्बत्वाभावस्य चापत्तेः । न चान्तःकरणस्य सुषुप्तौकारणे लयमात्रमेव न तु सर्वथा नाश इति वाच्य तदधीनस्वरूपस्थितिकस्यात्मनोपि लयप्रसंगात् । न चेष्टापत्तिः । त्वया सुषुप्तौ केवलानुभवानन्दस्वरूपस्थितिसमर्थ विरोधात् । नाहं किञ्चिदवेदिषमिति तदानीं ज्ञानाभासमात्रात्मस्वरूपे नाशस्य त्वन्मतेहमर्थो नात्मेतिस्थिते प्रत्युताहमित्यन्तःकरणोस्थितेश्च परामर्शविरोधाच्च । अपि चान्तःकरणमात्रं नेश्वरप्रतिबिम्बनोपाधिः किन्तु पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितमपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति भोगसाधनतयाभिहितलिङ्गदेहस्यापि तदुपाधित्वाभ्युपगमौचित्यात् । अन्यथान्तःकरणमात्रस्य स्वातन्त्र्येणासिद्धेः तथा त्वेतेषां संहतावपि तत्रात्यार्थिक्यभेदस्य तत्रापि सत्वेन तदुपाधिकस्य प्रतिबिम्बात्मन्यपि तत्रत्यार्थिकभेदस्यावर्ज्जनीयत्वाच्च । दृष्टं हि एकस्मिन्नपि मुकुरतले खण्डशः स्फुटिते मुखप्रतिबिम्बभेदनम् ।

किञ्च नीरूपस्य निराकरस्यानभिमुखस्यापरिच्छिन्नस्य कुत्रापि प्रतिबिम्बदर्शनाश्रवणात् । न च नीरूपस्याकाशस्य कथं जले प्रतिबिम्ब इति वाच्य नक्षत्रप्रभामण्डलस्यैव जले प्रतिभाससम्भवात्तस्मिंस्त्वयाकाशीयत्वारोपात् । जलेपश्याय चन्द्रो दर्पणे पश्येदं मुखं स्फाटिके च पश्ये ममरुणिमानमितिवज्जले आकाशस्य दृग्गोचरतया यमाकाशः पश्येत्यप्रतीतेश्च । न चाधिष्ठानचिति प्रतिबिम्बरूपं प्रमातृचैतन्यमिति न ब्रूमः किन्तु मायाप्रतिबिम्बितेश्वरचैतन्यप्रतिबिम्बरूपमिति तस्मिन् मायया साकारत्वाद्यापादनदिति वाच्यं नीरूपनिरवयवापरिच्छिन्नशुद्धब्रह्मणि निराश्रय निर्विषयाज्ञानपर्याय मायायामाभिमुख्याद्यभावेनाधिष्ठा-

महत्वेन चेश्वररूपप्रतिबिम्बस्यैवासम्भवात् । न हि शुक्त्यादेरधिष्ठानस्याध्यस्तरजतादौप्रतिबिम्बः प्रमाणगोचरः। न हि मायायास्तमशब्दवाच्यायाः स्वच्छद्रव्यद्रव्यत्वं तस्या हि ब्रह्मानन्दावरणत्वात् । तस्याः स्वच्छत्वे एव स्वरूपानन्दस्यानावृततया युगपत्सर्वमोक्षस्य चरमवृत्तौ वैय्यर्थ्यस्य बन्धात्पथानुपपत्या ज्ञानान्तरस्वीकारस्य वा पातात् । न हीन्द्वादेर्बिम्बस्य स्वप्रतिबिम्बोपाधिजलाद्यधिष्ठानत्वं परमेश्वरस्य च मायातत्कार्यनियन्त्रित्वम् । न स्यात् । न हि चन्द्रप्रतिबिम्बादेर्जलादिनियन्त्रित्वं नापि मायाया एव जडत्वेन तदुपाधीश्वरस्य सार्वज्ञादिगुणयोगः । न चेच्चन्द्रप्रतिबिम्बादेरपि ज्ञातृत्वादिः स्यात् । यथा स्वच्छत्वात् स्वस्मिश्चित्प्रतिबिम्बनं तथा स्वापेक्षया स्वच्छतमचितौ प्रथमत एव स्वस्य मायाया अपि प्रतिबिम्बनसम्भवेन स्वस्य पराभिभवान्न चितौ मायायां प्रतिबिम्बसम्भवः न हि स्वस्मिन् प्रतिबिम्बितमुखादौ पुनरादर्शादेः प्रतिबिम्बनं यदि नेश्वरः प्रतिबिम्बं तर्हि जीवोपि मास्तु । अन्यथा प्रति सुषुप्त्यन्तःकरणनाशेन तन्नाशादपुनरुत्थानस्य पुनरुत्पत्तौ स्मृत्यादननुसन्धानस्य चापातोक्तेः । न चान्तःकरणनाशेपि तत्संस्कारनाशान्न स्मृत्याद्यनुपपत्तिरिति वाच्यं आश्रयनाशस्याश्रितनाशव्याप्यत्वनियमात् संस्काराश्रयान्तःकरणस्यैव नाशात् संस्कारस्यापि नाशात् । ननु व्यक्तिनाशेपि जातेरनाशादिति चेत् न, संस्थानस्यैव जातित्वेन जातौ तदतिरिक्तत्वे नित्यत्वे च प्रमाणाभावादावयोः सम्मतत्वाच्च । न चान्तःकरणस्य ज्ञानाख्यक्रियाख्यशक्तिद्वयमस्ति । तत्र ज्ञानशक्तिमदन्तःकरणनाशेपि क्रियाशक्तिमदन्तःकरणनाशात् संस्कारानाश इति वाच्यं तथा स्वरूपज्ञानातिरिक्तज्ञानस्यैवानभ्युपेगमात । अयोदहतीत्यत्राग्यस्यग्निदग्धत्वशक्तिरिव चिदाभासस्यैवान्तःकरणे ज्ञानशक्तित्वात् । अन्तःकरणस्यैकत्वे चित्रपटस्यैव रक्तरूपविशिष्टपटनाशस्यैव स्वनाशवज्ज्ञानशक्तिमत्स्वनाशस्यैव क्रियाशक्तिमत् स्वनाशरूपत्वात् । अनेकत्वे च अनुभवस्मरणयोः समानाश्रयत्वसमानविषयत्वनियमात् ।

ज्ञानशक्तिमदन्तःकरणनाशादपुनरुत्थानं पुनरुत्थितस्यापि स्मृत्याद्यनुसन्धानं क्रियाशक्तिमदन्तःकरणसत्वेन जाग्रद्दशायामिवाहारविहारादि प्रवृत्तिस्तस्याज्ञानशक्त्यधीनत्वे तदुत्पादककारणाभावात् तस्या अनुत्पादः । उत्पत्तौ च तत्तद्गतचैतन्यसंक्रमेणादृष्टसंक्रमणात् प्रारब्धाव्यवस्थानमसंक्रमणे नियन्तृभेदादशरीरस्थितिः । विपक्षेतूपाधेः प्रतिबिम्बपक्षपातित्वाभावोन्यथा चितिक्षणिकत्वं च स्युः । अपि चैनं कर्मणामप्यनादित्वं न स्यात् । कथमिति चेत् इत्थम्, शुद्धचिति कर्तृत्वानुपपत्तिवच्चेतनानाधिष्ठितकेवलजडेऽपि स्वातन्त्र्येणाकर्तृत्वादधिष्ठात्रपेक्षायामधिष्ठातुस्तत्तच्छुभाशुभप्रवृत्यर्हं जडाधिष्ठातृत्वे कर्मापेक्षायां कर्मणां तत्कर्तृश्चान्तःकरणनिवर्त्यत्वेन तस्य च नित्यनाशात् । स्वातन्त्र्येणतस्यापि प्रवृत्तनर्हतया तथैवाधिष्ठात्रपेक्षायां प्रतिभासमात्रस्य चाधिष्ठातृत्वायोगात् ।

किञ्च "शरीरं यदवाप्नोती" त्युक्तेः सुषुप्तौ निरुपाधिप्रतिबिम्ब रूपात्मनाशेन लिङ्गदेहस्यापि नाशात् प्रेतत्वानुद्धारात् प्रतिबिम्बे परत एव बिम्बैक्य दर्शनेनेहापि तस्य परत एव भवितव्यत्वेन स्वयमेव "परीक्ष्य लोकान्" इत्यादि मोक्षाधिकारविध्यानर्थक्यात् । स्वोपाधेश्च स्वसाक्षात्कारेण बिम्बसाक्षात्कारेण वा नाशादर्शनाच्च । न हि प्रत्यक्षतो दृश्यमानेन्दुतत्प्रतिबिम्बसाक्षात्कारेण जलादिनाशः प्रत्युत प्रति बिम्बस्य दृष्टिसृष्टिरूपत्वात् । वेदान्तैः स्वसाक्षात्कारस्य सम्पादनीयत्वे स्वस्मिन् स्थैर्यस्यैव सिद्धेः । तथा च यस्य स्वज्ञानं तस्य बन्धो यस्य च न स्वज्ञानं तस्य मोक्षः । यथा यदा सुखानुभवस्तदा सुखं यदा न सुखानुभवस्तदा च न सुखं यथा च दुःखं तद्वत् ।

किञ्च जलादौ शशाङ्कप्रतिबिम्बमिदमिति सर्वजनसाधारण प्रतीतिवदिहापीश्वर प्रतिबिम्बमिदमिति प्रतीयेत न त्वहं ब्राह्मणोहं क्षत्रिय इत्यादिः । न हि दृष्टान्त इद जलं चन्द्र इति प्रतीतिः बिम्बीभू-

तेश्वरस्य परोक्षत्वे नीरूपत्वे वा दर्शेन्दोरिव प्रतिबिम्बस्यैवासम्भवात् । अपरोक्षत्वेपि स्वोपाधेरतज्ज्ञाननिवर्त्यत्वेन कदाचिदपि प्रतिबिम्बानिवृत्तेः । न चोपाधिरध्यस्तः । अध्यस्ते प्रतिबिम्बनाभावात् । अन्यथा ह्रदाम्बुनीव मरीचिकाम्बुन्यपीन्दुप्रतिबिम्बप्रसङ्गात् ।

किञ्चान्तःकरणाख्यात्यल्पोपाधिनाशेपि तन्मूलापरिमितमूलाविद्याख्योपाधेरनाशेन तन्निवर्त्य तदधीनेश्वराख्यचित्प्रतिबिम्बरूपबिम्बैक्यस्यामोक्षरूपत्वात् तन्नाशापरपर्य्यायशुद्धचिदैक्ये च युगपदेव कृताकृतमोक्षयत्नस्य सर्वस्य मोक्षप्रसङ्गेन प्रपञ्चशून्यप्रसंगाच्च तथात्यल्पस्याप्यन्तःकरणाख्योपाधेः स्वच्छायाश्चैतन्यं प्रतिदुस्सहनानायातनाहेतुत्वे स्वस्यापि चितिच्छायानन्यत्वे मूलाविद्याया ईश्वरं प्रति ततोप्यनल्पतरानिष्ठपरम्पराहेतुत्वं स्यात् । "निरवद्यनिरञ्जनप्रभृतिवाक्यानां तु शुद्ध चिद्विषयत्वेनाप्युपपत्तेः कुत्रचिज्जीवविषयतादृशवाक्यानामिव ।

किञ्च चन्द्रप्रतिबिम्बादौ कंपाद्यभावेपि स्वाभाविकजलाद्युपाधिगततदारोपादिह तु चितीवाचित्यपि स्वतोज्ञातृत्वाद्यभावात्कथमात्मनि ज्ञातृत्वादिवौपाधिक इति वचनस्य प्रामाण्यम् । वस्तुनः पुरुषगतगमनादिक्रियायास्तच्छायामिन्दुजलस्य च तत्प्रतिबिम्बेपि सत्वाच्चितिनिष्ठज्ञातृत्वं वक्तव्यम् । अन्यथा"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तप"इत्यादि ज्ञातृत्वश्रुतिविरोधात् । न च तत्रापि ज्ञातृत्वादेरविद्योपाधिकत्वादितिवाच्यम् जीवे तदभावात् । इहान्तःकरणोपाधिकत्वे तु ज्ञातृत्वादावेकस्यानुगतस्य नियन्तुरभावात् । घटादावपि तत्प्रसक्तेः स्वाभाविकोत्पुक्तिविरोधाच्च । ईश ज्ञातृत्वस्याप्यन्तःकरणतन्त्रत्वे तस्य जीवविशेषप्रसङ्गात् । तदीयान्तःकरणस्य सविशेषत्वे हिरण्यगर्भस्येव जीवविशेषत्वापातात् । "कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरि" त्येतत सर्वं मन एवेति श्रुत्या ज्ञातृत्वादेरन्तः-

करणधर्मताया एवोक्तेश्च । ततोप्यस्य विशेषे तद्गतविशेषस्य पारमार्थिकत्वं विना न तस्माद्भेदासिद्धेः । न हि सत्यदरिद्रान्मिथ्यावित्तपते सत्यानीश्वरान्मिथ्येश्वरस्य सत्यदुःखान्मिथ्यासुखस्य सत्यादज्ञान्मिथ्याप्राज्ञस्य सत्यबद्धान्मिथ्यामुक्तस्य सत्यक्षुधितान्मिथ्यातृप्तस्य च विशेषः प्रमाणप्रियः । तत्र शब्दमात्रभेदो न त्वर्थभेदो यदि स्यात्तर्ह्यनुभूयेत सः । न च दरिद्रादेरपि मिथ्यात्ववज्जीवगतानीश्वरत्वादेरपीश्वरगतेश्वरत्व मिथ्यात्ववच्च मिथ्यात्वादितिवाच्यं तथा सति जीव एव सत्येश्वरत्वस्यान्यत्र सत्यभूतानीश्वरत्वस्य सिद्धेः । उभयोर्मिथ्यात्वे च व्याघातात् । न चेत्तथापि विशेषाभावान्नहि मिथ्यात्वे विशेषः अलम् ।

किञ्च "ब्रह्मविदाप्नोति परं" "स यो ह वै परमं" 'ब्रह्मवेद्ब्रह्मैव भवती' त्यादि श्रुत्या ज्ञातुरेव ब्रह्मप्राप्तिवचनादन्तःकरणस्यैव ज्ञातृत्वस्तदैक्यमोक्षप्रसङ्गात् अलं बिम्बत्वाभ्रान्तेश्वरचैतन्यस्य जीवप्रदेशे सत्वे तस्य सर्वात्मकत्वं न स्यात् । न च विशेष्यांशस्य तत्रापि सत्वादिनिवाच्यं विशिष्टमतिरिक्तमितित्वदुक्तेर्विशेष्यांशधिष्ठानचितश्चासर्वात्मकत्वात् । "ईश्वरः सर्वभूतानामहमात्मे" त्याद्यनुरुध्य विशिष्टस्यैव सर्वात्मकत्वौचित्यमत् । अन्यथा जीवस्य विशिष्टस्येश्वर एव प्रतिबिम्बः । न च जीवस्य विशिष्टस्येश्वरप्रदेशाभावादिति वाच्यं विशिष्टांशस्य तत्रापि सत्वात् यावत्प्रतिबिम्बस्य चक्षुरेकग्राह्यत्वनियमात् । प्रकृतेः बिम्बप्रतिबिम्बोपाधीनां त्रयाणामप्यतीन्द्रियत्वात् । तथा यत्प्रतिबिम्बत्वेन विमतं चक्षुग्राह्यं न, न तत्प्रतिबिम्बम् यथा जले गगनं ह्यात्मा च । यद्यच्चक्षुर्ग्राह्यं तत्तद्रूपि यथा घटादि । यद्वा यद्यद्रूपि तत्तच्चक्षुर्ग्राह्यम् । यथा घटस्वर्णादि । यद् रूपरहितं न तच्चक्षुर्ग्राह्यम् । यथा कालाकाशादि । पश्यामि कालमिति प्रतीतिस्तु साक्षिगतकालप्रत्यक्षविषयेति न काचिदनुपपत्तिः । सर्वस्य हि पदार्थत्वावच्छिन्नस्यान्तःकरणग्राह्यत्वात् । नीरूपस्य रूपस्य साश्रयस्यैव प्रतिबिम्ब । वस्तुनः स्वाश्रयद्रव्यैवानीरूपे रूपभिन्ने निराश्रये निराकारे ब्रह्मणि बिम्बत्वाक्रान्तेरेवासम्भव इत्युक्त-

त्वाच्च । गिरिगुहादौ शब्दोत्थितः शब्द एव वीचीतरङ्गन्यायेन यद्वा स्वोपाधिपौष्कल्यादेक एव पुष्कलःशब्दो न तत्र तस्य प्रतिबिम्बनमपि च लोके वेदे च निर्गुणस्य गुणादेर्ज्ञातृत्वरहितस्य ज्ञानस्य जातिशून्यस्य जात्यादेर्निर्विशेषस्य विशेषस्याद्रव्यद्रव्यत्वादेररूपस्य रूपस्य निराकारस्याकारस्य निःक्रियायाः क्रियाया असंसृष्टस्य समर्गस्य निर्भेदस्याभिन्नस्याभेदस्य च निराश्रयतयैवाननुभवात् ।

किञ्च अपरिच्छिन्ने ब्रह्मण्यनुभवितृण्यनुभवे वा कल्पितेन जीवेश्वरभेदेनानादिकालानन्तकालप्रवाहापन्नप्रतिकर्मव्यवस्थायाः कथमपि नोपपत्तिरित्युक्तत्वात् । यथा करचरणादि व्यावहारिकभेदे सत्यप्यत्र मे सुखमत्र च मे दुःखमिति सुखाद्यनुसन्धानुरेकस्यैव प्रतीतेः तथौपाधिक भेदे सत्यप्युपहितानुपहितावच्छिन्नानवच्छिन्नबिम्बत्वाक्रान्ततदनाक्रान्त प्रतिबिम्बत्वापन्नतदनापन्नस्वलक्षणचैतन्यसाधारणायाश्चितेरेकत्वम् । तथा च श्रुतिः "एकमेवाद्वितीयं ब्रह्म" "य उदरमन्तरमि" त्यादिः । तस्या एव तत्तदवच्छेदनानुभवितृरूपत्वात् । ने चेदस्यां साधारण्यं न स्यात् । स्वरूपभेदे वास्तवत्वप्रसङ्गाच्च । यद्वा चितिस्वरूपातिरिक्ते जीवे वस्तुतो मिथ्यात्वमेव स्यात् । चितिरेव स इतिपक्षे प्रतिबिम्बत्वानुपपत्तेरुपपत्तौ चितित्वानुपपत्तेश्च । वस्तुतस्तु-आदर्शाद्युपाधि संसृष्टैस्तत्प्रनिहतगतिभिर्नायनतेजोभिः परावृत्त्योपाधिस्थतया स्वमुखादेरेवग्रहणपक्षः प्रकृते न सम्भवति । अल । अहो वेदान्तमाहात्म्यं यत्रात्मा प्रतिबिम्बति छिद्यतेऽसौ निरंशोप्यच्छिन्नः किन्तु ततः परम् ।

इत्यानन्दभाष्यकार--श्रीरामानन्दाचार्यपादपद्मोपजीविना

श्रीकीलद्वारपीठसंस्थापकेन जगद्गुरुश्रीकीलदेवाचार्येण

विरचितेऽध्यासध्वंसलेशे प्रतिबिम्ब भंगो

नाम चतुर्थः परिच्छेदः ॥४॥

# अथ पञ्चमः परिच्छेदः

आत्मपरमात्मनोर्विम्बप्रतिबिम्बीभाववन्मायिमते तयोरशांशिभावस्याप्यनुपपत्तेः। नन्वंशो ह्येष परमस्य "पादोस्य विश्वा भूतानि" "ममैवांशो जीवलोक" इत्यादिमानैर्जीवब्रह्मांशत्वस्य सिद्धत्वात्। कथमनुपपत्तिरितिचेत्, न, तन्त्वादिभिः पटस्यैव कपालादिना घटस्यैव पार्थिवादि परमाणुभिर्न्यायिनये पृथिव्यादिरिव बीजांकुरादिना तरोरिव श्रवणादिभिर्विद्याया इव च जीवेन ब्रह्मणोनादित्वे नानारम्यत्वान्न तावदारम्भकत्वमंशत्वम्। नापि पितुरंशोयमित्यत्र पुत्रे पित्रा स्वकर्तृकनवदेहसम्बन्धित्वरूपारम्यत्वमिव ब्रह्मणा जीवे तादृशारभ्यत्वं तस्य सत्य भेदेनाप्युपपत्तेरैक्यासिद्धेः। नापि भर्तुर्भार्यांश इत्यत्र भार्य्यायां भर्तृभोग्यत्वं भर्तरि च भार्य्याभोग्यत्वमिव जीवे ब्रह्मभोग्यत्वमस्यापि तद्वदुपपत्तेः। तस्या "नश्नन्नन्योभिचाकशीति" सम्भोगप्राप्तिरितिचेन्न, वैशेष्यादिति श्रुतिसूत्राभ्यां भोगनिषेधाच्च। नापि नृपांशःप्रजा इत्यत्र प्रजासु नृपपाल्यत्वमिव जीवे ब्रह्मपाल्यत्वम्। नापि नृपालो लोकपालांश इत्यत्र तत्तल्लोकपालगुणैकदेशवत्वमिव नृपालेजीवे ब्रह्मगुणैकदेशवत्व ब्रह्मणोऽनगुणत्वात्तद्वदुपपत्तेश्च नैवेद्यदशांशं श्रीहनुमते निवेदयेत्। वित्त दशांशं तीर्थीकुर्यादित्यत्र नैवेद्यवित्तांशे विभागत्वमिव जीवे ब्रह्मविभाग त्वायोगात् ब्रह्मणो विभक्तत्वाद् भागप्रतियोग्यभावाच्च। नापि चन्द्रविम्बादगुरुविम्बो शतांश इत्यत्र तस्मिस्ततो न्यूनत्वमिव ब्रह्मणोजीवे न्यूनत्वम्। अयं राक्षसांश इति पुंसि राक्षसस्वाभाविकनिर्दयत्वादि–दोषयोगित्वमिवायं च देवांश इत्यत्रापि देवस्वाभाविक सौम्यसौशील्यादि गुणयोगित्वमिव च जीवे ब्रह्म तादृशगुणदोषयोगित्व तद्वदुपपत्तेः। नापि विशिष्टमंशद्वयात्मकमिति पदार्थयोर्विशेषणविशेष्यान्यतरत्वमिव जीवेश्वरयोर्विशेषणविशष्यान्यतरत्वं शुक्ल इतिवत् पूर्ववत्। नापि न्यायमते जातौ व्यक्तिभिन्नत्वं व्यावहारिकभेदासिद्धभेदस्येवाभेदस्यापि ब्रह्मण्यभावान्मोक्षेऽतिप्रसक्तेः सिद्धसाधनादैक्यासिद्धेश्च।

नापि सांख्यमते कार्यकारणयोरिव मीमांसकमते च गुणगुणिनोरिव जीव-ब्रह्मणोर्भिन्नाभिन्नत्वं विरोधात् । नाप्यौपाधिकभेदभिन्नत्वं जीवेष्वन्यो-न्यमविद्यायां चातिप्रसक्तेः । नापि संसारित्वं मत्स्याद्यवताराव्याप्तेः वस्तुतो ब्रह्मण एव जीवस्वरूपेण संसारितयान्यमेव प्रति तत्प्रसङ्गात् । न च शुद्धस्यान्यत्वात् । समग्रस्य ब्रह्मणो जीवभावाभावेनेतिवाच्यं पारि-भाषिकत्वात् । नापि कार्यत्वमविद्यां प्रत्येव तत्प्रसङ्गात् । नापि प्रतिबि-म्बत्वं अवच्छेदवादेऽभावात् । नाप्यवच्छिन्नत्वं प्रतिबिम्बवादेऽव्याप्तेरीश्वरे चातिव्याप्तेः । नापि प्रदेशत्वं ब्रह्मणि सखण्डत्वापातादैक्यासिद्धेश्च नापि खंडत्वं ब्रह्मणोऽखंडत्वात् । नापि समुदायत्वं जीवसमुदायस्य ब्रह्मत्वे तस्य वि-द्यया विनाश्यत्वेन ब्रह्मविनाशप्रसंगात् यथासंयोगविशेषापन्नतन्तुसमुदायनाशे तदात्मकपटनाशात् । समुदायात्समुदायिनोऽन्यत्वे सत्कार्यविरोधात् समुदा-यिनः संसृष्टत्वेन सखण्डत्वप्रसंगाच्च । किञ्च स्वतो निरंशमखण्ड ब्रह्म प्रति कल्पितांशखण्डप्रदेशादेरयोगेन निरवयवे तस्मिन्कल्पितकल्पका-विद्यादिनाश्रितत्वस्यैवासम्भवात् । अस्तु वा तथापि संसृष्टचैतन्यमसंसृष्ट-चैतन्यं प्रति वा जीवचैतन्यमंशः ? आद्ये संसृष्टयोरैक्यस्यामोक्षरूपत्वात् नित्यमायोपाधिकेश्वरचैतन्यस्य महासंसारित्वात् सोऽपि मोक्ष्यते इत्यत्र प्रमाणाभावाच्च । तस्य नित्यमुक्तत्वे जगत्सृष्ट्याद्यनुपपत्तेर्जीवस्यापि नित्यमुक्तत्वप्रसङ्गाच्च । अवच्छिन्नत्वे विशेषाभावात् । अन्ते विरोधात् प्रमाणाभावाच्च । अस्तु वा तर्हि तद्भिन्नत्वे सति तत्सदृशत्वमंशत्वमि ति चेत्, इदमपि न, सिंहो माणवकः राजशार्दूलः पुरुषव्याघ्र एतत्पटस्तत्पट सदृशो "राजीवलोचनो राम इन्द्रनीलमणिप्रभः" "कृष्णः कमललोचनः" "अतसीपुष्पसंकाशस्तडिदम्बरसंवृतः" "कालाग्निसदृशः क्रोधे क्षमया च पृथीवीसमः' इत्यादौ सर्वत्रातिप्रसङ्गात् । अस्तु वा गौणमिदम्' किं तर्हि मुख्यमंशत्वं उच्यते । एकवत्वेकदेशत्वमेव मुख्यमंशत्वमित्यवधारय इतोन्यत्सर्वं गौणमेव, अलं सर्वापि मायिनां प्रक्रिया ब्रह्मणि मायाध्या-

समूला । स एव ब्रह्मण्यध्यस्तः । न चेत्तस्याबाधेन ब्रह्म सद्वितीयं स्यात्। सोपाधिकेन बाधेनापि ब्रह्मण्ये द्वितीये सद्वितीयत्वं विरुद्धम् । भावाभावयो• विरहरूपत्वादैक्यमपि विरुद्धम् । उपाधिर्द्विविध । उपधायको व्यावर्तकश्चेति । तत्र किं शुद्धं ब्रह्म माययोपधीयते स्वस्मिन्ब्रह्मणा वा स्वस्मिन्मायोपधीयते मायाया ब्रह्म व्यावर्त्यते ब्रह्मणा माया वा व्यावर्त्यते स्वतः शुद्धस्यैव स्वतो मायया स्वस्मिन्स्वोपधानेनेश्वरत्वं भविष्यतीति प्रथमपक्षे आश्रयविषयशून्यायाः प्रातिभासिक्या निरधिष्ठितव्येन स्वस्मिश्चैतन्योपधानक्रियाकर्तृत्वायोगेन निरवयवेपरिच्छिन्ने स्वग्राह्यावयवाभावान्मायया स्वयमेव स्वस्मिन् ब्रह्मोपधानमनुपपन्न स्वया चिदचितोः सम्बन्धस्य वृत्तिद्वारकस्यैव स्वीकारेण तदानीं वृत्यभावात् । द्वितीयेऽसाधकाबाधके शुद्धे विभुनि ब्रह्मणि स्वयमेव स्वस्मिन्मायोगधानानुकूलव्यापाराभावात् । स्वस्मिन्नपि ब्रह्मणा मायोपधानमसम्भवि मायायामुपधेयत्वस्य ब्रह्मणि चोपाधित्वस्य प्रसङ्गात् । मायाब्रह्मणोर्जपास्फटिकादिविलक्षणत्वाच्च । तृतीये मायाया उपलक्षणत्वेन ब्रह्मण्य ब्रह्मव्यावर्तकत्वे निराकारे ब्रह्मणि स्वोपलक्ष्याकारस्यैवाभावेन तदानीं प्रपत्तुरप्यभावेन स्वातिरिक्तव्यावर्त्यस्य चाभावेन न तस्यास्तत्त्वम् । यदि माया व्यावर्तयेद् ब्रह्म तदालीकादेव व्यावर्तयेत् । स्वसाक्षात्कारेण मायानाशे तु ब्रह्मासदेव स्यात् ।

किञ्च शक्यस्यैवोपलक्ष्यत्वेन ब्रह्मणोशक्यत्वान्न तत्त्वम् । चतुर्थेपि मायायां ब्रह्मणा स्वातिरिक्तव्यावर्त्यभावेन स्वव्यावर्त्यत्वे नित्यमुक्तशुद्धबुद्धरूपतया स्वस्मिन् जीवेश्वरादिभेदाभावस्य पर प्रत्युपाधित्वस्य चापातात् ।

किञ्च शुद्धस्य मायाप्रत्यक्षत्वमस्ति न वा ? अस्ति चेत् अनिर्वचनीयख्यातिवादिनो मते तस्याः किमुपादानं किं निमित्तं किञ्चाधिष्ठानं भ्रान्तस्य तस्य ? किन्तु शुद्धत्वं स्वस्मिन्स्वोपादानत्वे विरोधाद् ब्रह्माधिष्ठानत्वेपि स्वोपादानाद्यपेक्षयाऽनवस्थानात् । न चेद्वियदादावपि तद्-

देवास्तु । अन्ते दृष्टिसृष्टितया मायाया एवाभावात् । अनादित्वेपि ब्रह्मण इव तस्या अपि निर्णयावश्यम्भावाद् अनिर्वचनीयेत्यनेनाप्यनिर्णय-वचनव्याघाताच्च । अन्यथा तस्यां मिथ्यात्वस्यापि दुरुपपादनान्मिथ्या-त्वनिश्चये तद्धेतुनिश्चयस्यैवान्वयव्यतिरेकितया हेतुत्वावधारणाच्च । एवञ्च मायाया निर्निमित्तत्वे स्वोपादानानपेक्षया अन्यत्रापि तथै वस्या-न्नचेत् स्ववाग्विरोधिता ।

अनादित्वे न मित्थ्यात्वं व्याहृतं वियदादिषु ।
तव ब्रह्माप्यनित्यं स्याद् दृश्यत्वादिमदन्यथा ॥१॥
फलव्याप्यत्वमेतस्मिन् साधितं भवतैव हि ।
घटादावपि नैव स्यादन्यथाफलव्याप्यता ॥२॥
प्रतिबिम्ब न जीवोऽस्या नीरूपा हि चिति स्वतः ।
ईशस्यापि सदेशत्वं सर्वगस्य भवेन्न चेत् ॥३॥
नीलं नभ इति प्राज्ञैरुक्तं यत् सत्यमेव तत् ।
प्रतिबिम्बं भवत्विष्टमस्य नैव क्वचिच्चितेः ॥४॥
अवच्छेदमतेऽपीशे जीवस्वामित्वशून्यता ।
गमनादिप्रसङ्गे च कृतनाशप्रसङ्गतः ॥५॥
जीवा अणव एव स्युः स्वत एव स्वरूपतः ।
विभवो ज्ञानतश्चांशा ब्रह्मणः स्वत एव हि ॥६॥
भिन्ना नित्या स्वतः सर्वे संख्यातीता अनादयः ।
ज्ञानानन्दस्वरूपास्ते ज्ञानानन्दगुणास्तथा ॥७॥
शेषभूताः स्वतोबन्धे मोक्षे च परमात्मनः ।
अस्वतन्त्राः स्वतन्त्रस्य तद्वदेवानिमित्ततः ॥८॥
सम्राजः कर्मबन्धस्यानादेर्नाशाद् भवन्ति ते ।
पारतन्त्र्यं परेशस्य सर्वावस्थासु सर्वथा ॥९॥
स्वरूपं जीवसंज्ञस्य वेदान्तेषु निगद्यते ।
तल्लाभो मोक्ष इत्युक्तः सर्वाविद्याविनाशतः ॥१०॥

ज्ञप्तित्वं सुखरूपत्वं पुमर्थो न बुधैर्मतः ।
स्यामहं सुखमित्यस्या इच्छाया क्वाप्यसम्भवात् ॥११॥
किलाहं स्यां सुखीत्येव पुमर्थेच्छा बुधैर्मता ।
सुखस्यानुभवितृत्वं मोक्षतत्वमिहोच्यते ॥१२॥
परिपूर्णा हरेर्यातु शेषवृत्तिः स्वतो फला ।
सा हि मम मते मोक्षः सैव भक्तिरितिस्मृता ॥१३॥

इत्यानन्दभाष्यकार – भगवद्रामानन्दाचार्यपादपद्मोपजीविना श्रीकीलद्वारपीठसंस्थापकेन जगद्गुरु-श्रीकीलदेवाचार्येण विरचितेऽध्यासध्वंसलेशे जीवस्यांशत्वेन ब्रह्मैक्यभङ्गो नाम पञ्चमः परिच्छेदः ॥५॥

**समाप्तोऽयमध्यासध्वंसलेशः**



श्रीयोगीन्द्रग्रन्थमालायाः श्रीरामानन्दवेदान्तविषयकश्चतुर्थं पुष्प

श्रीसाकेतविहारिणे नमः ।

श्रीप्रस्थानत्रयानन्दभाष्यकाराय नमः ।

श्री १००८ जगद्गुरुश्रीमदनन्तानन्दाचार्यचरणप्रणीतः

# सिद्धान्तदीपकः

स च शतावधानजगद्विजयिमहामहोपाध्याय-वेदान्तकेसरि-

**श्री १०८ श्रीस्वामि-रघुवराचार्य-चरणचञ्चरी**

**स्वर्गीयरामप्रपन्नाचार्ययोगीन्द्र-**

श्रीशेषमठ-'शींगडा' श्रीकोसलेन्द्रमठा(अहमदाबाद)धीशप्रणी

## किरणावलीनामकवृत्त्या विभूषितः

संशोधकः प्रकाशकश्च

स्वामिरामेश्वरानन्दाचार्यः, व्याकरण-वेदान्ताचार्य-साहित्यरत्न

श्रीरघुवररामानन्दवेदान्तमहाविद्यालयः

श्रीकोसलेन्द्रमठः, अहमदाबादः–७



मातृभूमि मुद्रणालय, जयपुर

श्रीसाकेतविहारिणे नमः

श्रीप्रस्थानत्रयानन्दभाष्यकाराय नमः

जगद्गुरु-श्रीमदनन्तानन्दाचार्यचरणप्रणीतः-

# सिद्धान्तदीपकः

## किरणावली वृत्ति-सहितः

जगन्निमित्तोपादानकारणो गुणसागरः ।
आश्रितस्वद्रुमः शश्वद्राघवः कुरुतात्कृपाम् ॥१॥

राघवरमणां रम्या रमां रामरतिप्रियाम् ।
सीतां सन्निहितां शान्तां 'रामः' स्तौति पुनः पुनः ॥२॥

प्रस्थानत्रयसंवक्ता सर्वसूरिसुपूजितः ।
पायादपायात्संभाव्याद्रामानन्दो जगद्गुरुः ॥३॥

तत्त्ववित्सर्वशास्त्राणां वादे प्रतिभटं गुरुम् ।
श्रये वेदान्तपञ्चास्यं नित्यं रघुवरं बुधम् ॥४॥

भाष्यतत्त्वविदं नत्वाऽनन्तानन्दं जगद्गुरुम् ।
जिज्ञासुप्रेरितः कुर्वे दीपके किरणावलीम् ॥५॥

अथानन्तकल्याणगुणगणमहोदधिः श्रीसाकेतनिलयो भगवान् श्रीरामः "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे" ॥ इति स्वाऽऽननोदीरितप्रतिज्ञा-

मनुपालयन् रात्रिन्दिवं यवनत्रासोद्विग्नान्, त्राहीति भूयो जल्पमानान्, स्वाश्रितान् मा भैष्टेतिसर्वाभयप्रदेन मेघगंभीरनादेन समास्वाशयन्, श्रीतीर्थराजे सर्वोत्तमकान्यकुब्जकुलावतंसश्रीपुण्यसदनसद्मनि श्रीसुशीलायां देव्यां श्रीरामानन्दरूपेण स्वयमवतीर्य स्वावतारलीलां विस्तारयामास।

तीर्थाटनव्याजेन प्रतिदिश परिभ्रमन्, सकलपरिपन्थिगणं शास्त्रार्थमहाहवे विनिर्जित्य, सनातन–श्रीवैष्णव-धर्मरक्षणकीर्तिरूपं प्रस्थानत्रयभाष्यस्तम्भं विश्वेऽस्मिन्नादिवराहो मेरौ भूरिव श्रुतिस्मृतीतिहासपुराणतर्कादिवाग्युक्तिरूपवज्रसारदृढाबद्धमूलं संस्थिरयाम्बभूव।

परञ्चेदं प्रस्थानत्रयरत्नं स्वल्पाक्षरमतिगभीराशयं विशदार्थगर्भमूहापोहकुशलैः सम्यक्समाराधितगुरुचरणैर्वाग्मिभिरेव सम्बोध्यत्वेन, श्रद्धावतां श्रीवैष्णवसनातनमार्गप्रविवीक्षूणां साधारणशिक्षितानामपि सुलभप्रवेशायाऽनायासेनस्वसिद्धान्तबोधनाय चेदं स्वल्पाक्षरमपि विशदार्थगर्भं, श्रुति-शास्त्रगह्वरस्थरत्नरूपाचारसिद्धान्तप्रकाशनपरं त्रिचत्वारिंशच्छ्लोकसंख्यापरिमितम् 'सिद्धान्तदीपकः' इति नामकं स्वनाम्नैव प्रथितयशस्कम्, श्रीरामानन्दभाष्यत्रयार्थमतप्रदीपनपरं प्रबन्धं, आचार्यशिरोरत्नजगद्गुरु–श्रीस्वामिरामानन्दाचार्यप्रधानकृपापात्रेण जगद्गुरु–श्रीमदनन्तानन्दाचार्यवर्येण विरचितम्। तस्मिन् "ज्योतिः" इति समाख्यया श्रीस्वाम्यनन्तानन्दाचार्यसच्छिश्यद्वाराचार्य–श्रीस्वामिनरहर्यानन्दाचार्येण परमकृपालुना प्रणीता समासाद्यते लघुवृत्तिः। सापि सिद्धान्तजिज्ञासुवर्गाणां परमलघमतीनां स्वल्पाक्षरतयातिगभीराशयतया च सकलसिद्धान्तविज्ञाने किञ्चिद्दुर्बोधमिव मत्वा यथामति पूर्वाचार्याऽकरग्रन्थावलिमवलम्ब्याऽन्वयाभिमुखेन व्याख्यायते, यस्यायं शिष्यप्रशिक्षणपरकः स्वेष्टदेवनमस्काररूप आदिमः श्लोकः—

साकेताधीश्वरः श्रीमज्जानकीवल्लभो विभुः ।
अव्याच्छाश्वतं रामो भक्ताभीष्टप्रदो हरिः ॥१॥

भक्ताभीष्टप्रदो भक्तानां स्वाश्रितानां प्रपन्नानमभीष्टं स्वाभिलषितं मोक्षादिकं वा प्रददाति संप्रयच्छतीति भक्ताभीष्टप्रदः प्रपूर्वकदाधातोः कर्मण्युपपदे "प्रे दाज्ञः" (३।२।६।) इतिपाणिनीयेन कः प्रत्ययः । भक्तानां स्वाभीष्टपदार्थप्रदायकोऽखिलैश्वर्यशालिनिखिलकल्याणगुणगणको भगवच्छ्रीरघुनाथ एव "जगतः पितरौ रामो जानकी वेदविश्रुतौ । सर्वेशौ सर्वगौ सम्यक् सर्वज्ञौ सर्वदौ शिवौ" ॥ इति वाल्मीकिसंहितोक्तेः ।

यथा राज्यसर्वसत्त्वसम्पन्नो राजा स्वसेवकेभ्योऽभिलषितं सर्वमपि पदार्थजातं संप्रदातुमीशः सर्वसत्वाधिकारिकत्वेनेतरराजाप्रतीक्षत्वाभावात् । तथैव सर्वलोकाधिपानां स्वामी भवगच्छ्रीरामचन्द्रोऽपि स्वानन्यरूपेणाश्रितानां जनानां सकलवस्तुजातं प्रदातुमीशः । सर्वेश्वर्यशालित्वेन किमपि पदार्थजातानां दुर्लभत्वाभावात् । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनु प्रविश्य सच्च त्यच्चाभवत्" "स एव सृज्यः स च सर्वकर्ता स एव पात्यत्ति च पाल्यते च । ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः । ( वि० पु० १।२।६७ ) "कर्ता सर्वस्य जगतो भर्ता सर्वस्य सर्वगः । संहर्त्ता कार्यजातस्य श्रीरामः शरणं मम ॥" (बृ० ब्र० संहिता) इत्यादिश्रुतिस्मृत्युक्तदिशा भगवतः श्रीरामस्य सङ्कल्पमात्रेणाखिलजगदुत्पत्तिस्थितिप्रलयसम्भवात् ।

किञ्च "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मा नावीशते" इत्यादिश्रुतिप्रामाण्यात् सर्वेश्वरस्य भगवतः कस्मैचिदपि कस्यापि वस्तुजातस्य प्रदानाय परापेक्षत्वाभावाद् भक्ताभीष्टप्रदत्व सुसम्पन्न सकलब्रह्माण्डनायकश्रीरामस्य ।

तदुक्तं महर्षिवाल्मीकिनापि श्रीमद्रामायणे "धनदेन समस्त्यागे" (बा० १।१६) इति। तथैव श्रीसनत्कुमारसंहितायामपि "भक्तप्रियं पद्म-नेत्रं भक्तानामीप्सितप्रदम्" इति। श्रीमद्रामायणयुद्धकाण्डे श्रीब्रह्मणापि "अमोघ दर्शनं राम अमोघस्तव संस्तवः। अमोघास्ते भविष्यन्ति भक्ति-मन्तो नरा भुवि" (११६।३०) इति। तथैवास्मदाचार्याऽनन्दभाष्यकारैरपि श्रीवैष्णवमताब्जभास्करेऽभिहितम् "भूरिमान्यो वदान्यः" इति। "भक्ता शेषमनोभिवाञ्छितचतुर्वर्गप्रदं स्वद्रु मम्" इति च॥ हरति स्वाश्रितजनानां भवबन्धनरूपमघमिति हरिः। हृञ् हरण इत्यस्मात् "अच इः" (४।१३६) इत्यौणादिकेन, इप्रत्ययः। "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम" इति स्मरणात् कृपाकूपारभगवति श्रीरामे सर्वाभयप्रदत्वमिति भावः।

विभुर्व्यापकः "तदैक्षत बहु स्यां प्रजायेय" (छा० ६।२।३) इति श्रुतेः। व्याख्यातञ्चेयं श्रुतिस्तथैवाऽऽनन्दभाष्यकारैः—तत्सत् शब्दवाच्यं परब्रह्म ऐक्षत ईक्षणं सङ्कल्पं कृतवान् एकोप्यहं बहु विचित्रानन्तजडचेतन-मिलितव्यष्टिजगद्रूपेण बहु अनेकरूपः स्यां प्रजायेय प्रकर्षेण जायेय" इति। अतोऽस्मिन् षडैश्वर्यवति श्रीरघुनाथे विभुत्वं सुस्थमिति भावः। साकेताधीश्वरो नित्यधाम—श्रीअयोध्यानायकः "अयोध्यानगरी नित्या सच्चिदानन्दरूपिणी। यस्यांशेन हि वैकुण्ठ—गोलोकादि प्रतिष्ठितम्॥ पूर्णः पूर्णतमः श्रीमान् सच्चिदानन्दविग्रहः। अयोध्यां क्वापि सन्त्यज्य-पादमेकं न गच्छति॥" इत्युक्तेः। श्रीर्ज्ञानैश्वर्ययशश्श्रीवैराग्यधर्मरूप-षडैश्वर्यमस्या अस्तीति श्रीमती "तदस्यास्त्यस्मिन्निति मतुप्" (५।२।९४) इति पाणिनीयेन मतुपि कृते ङीपि, जानकी वल्लभायस्य "स्त्रियाः पुम्वत्" (६।३।३४) इति पुम्वत्। अथवा "ज्ञानशक्तिवलैश्वर्यवीर्यतेजांसि षड् गुणाः। भगत्वेनेरिताः सन्ति श्रीरामे भगवान् स तत्॥" इति श्री रामभगवत्त्वे जगद्गुरु—श्रीगङ्गाधराचार्येण सन्निरूपितम्। ते च 'अनन्या-राघवेणाहं भास्करेण प्रभा यथा" "अनन्या च मया सीता" इत्यादि-

श्रीसाकेतविहारिणे नमः

श्रीप्रस्थानत्रयानन्दभाष्यकाराय नमः

जगद्गुरु—श्रीमदनन्तानन्दाचार्यचरणप्रणीतः—

# सिद्धान्तदीपकः

## किरणावली वृत्ति-सहितः

जगन्निमित्तोपादानकारणो गुणसागरः ।
आश्रितस्वद्रुमः शश्वद्राघवः कुरुतात्कृपाम् ॥१॥

राघवरमणां रम्यां रमां रामरतिप्रियाम् ।
सीतां सन्निहितां शान्तां 'रामः' स्तौति पुनः पुनः ॥२॥

प्रस्थानत्रयसंवक्ता सर्वसूरिसुपूजितः ।
पायादपायात्संभाव्याद्रामानन्दो जगद्गुरुः ॥३॥

तत्त्ववित्सर्वशास्त्राणां वादे प्रतिभटं मुखम् ।
श्रये वेदान्तपञ्चास्यं नित्यं रघुवर बुधम् ॥४॥

भाष्यतत्त्वविदं नत्वाऽनन्तानन्द जगद्गुरुम् ।
जिज्ञासुप्रेरितः कुर्वे दीपके किरणावलीम् ॥५॥

अथानन्तकल्याणगुणगणमहोदधिः श्रीसाकेतनिलयो भगवान् श्रीरामः "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे" ॥ इति स्वाऽऽननोदीरितप्रतिज्ञा-

मनुपालयन् रात्रिन्दिवं यवनत्रासोद्विग्नान्, त्राहीति भूयो जल्पमानान्, स्वाश्रितान् मा भैष्टेतिसर्वाभयप्रदेन मेघगंभीरनादेन समास्वाशयन्, श्रीतीर्थराजे सर्वोत्तमकान्यकुब्जकुलावतंसश्रीपुण्यसदनसद्मनि श्रीसुशीलायां देव्यां श्रीरामानन्दरूपेण स्वयमवतीर्य स्वावतारलीलां विस्तारयामास ।

तीर्थाटनव्याजेन प्रतिदिश परिभ्रमन्, सकलपरिपन्थिगणां शास्त्रार्थमहाहवे विनिर्जित्य, सनातन–श्रीवैष्णव-धर्मरक्षणकीर्तिरूपं प्रस्थानत्रयभाष्यस्तम्भं विश्वेऽस्मिन्नादिवराहो मेरौ भूरिव श्रुतिस्मृतीतिहासपुराणतर्कादिवाग्युक्तिरूपवज्रसारदृढावद्धमूल संस्थिरयाम्बभूव ।

परञ्चेदं प्रस्थानत्रयरत्न स्वल्पाक्षरमतिगभीराशयं विशदार्थगर्भमूहापोहकुशलैः सम्यक्समाराधितगुरुचरणैर्वाग्मिभिरेव सम्बोध्यत्वेन, श्रद्धावतां श्रीवैष्णवसनातनमार्गप्रविवीक्षूणां साधारणशिक्षितानामपि सुलभप्रवेशायाऽनायासेनस्वसिद्धान्तबोधनाय चेदं स्वल्पाक्षरमपि विशदार्थगर्भं, श्रुति-शास्त्रगह्वरस्थरत्नरूपाचारसिद्धान्तप्रकाशनपरं त्रिचत्वारिंशच्छ्लोकसंख्यापरिमितम् 'सिद्धान्तदीपकः' इति नामकं स्वनाम्नैव प्रथितयशस्कम्, श्रीरामानन्दभाष्यत्रयार्थमतप्रदीपनपरं प्रबन्ध , आचार्यशिरोरत्नजगद्गुरु–श्रीस्वामिरामानन्दाचार्यप्रधानकृपापात्रेण जगद्गुरु–श्रीमदनन्तानन्दाचार्यवर्येण विरचितम् । तस्मिन् "ज्योतिः" इति समाख्यया श्रीस्वाम्यनन्तानन्दाचार्यमच्छिरस्थद्वाराचार्य–श्रीस्वामिनरहर्यानन्दाचार्येण परमकृपालुना प्रणीता समासाद्यते लघुवृत्तिः । सापि सिद्धान्तजिज्ञासुवर्गाणां परमलघमतीनां स्वल्पाक्षरतयातिगभीराशयतया च सकलसिद्धान्तविज्ञाने किञ्चिद्दुर्बोधमिव मत्वा यथामति पूर्वाचार्याऽकरग्रन्थावलिमवलम्ब्याऽन्वयाभिमुखेन व्याख्यायते, यस्यायं शिष्यप्रशिक्षणपरकः स्वेष्टदेवनमस्काररूप आदिमः श्लोक.—

साकेताधीश्वरः श्रीमज्जानकीवल्लभो विभुः ।
अव्याच्छाश्वतं रामो भक्ताभीष्टप्रदो हरिः ॥१॥

भक्ताभीष्टप्रदो भक्तानां स्वाश्रितानां प्रपन्नानमभीष्टं स्वाभिलषितं मोक्षादिक वा प्रददाति संप्रयच्छतीति भक्ताभीष्टप्रदः प्रपूर्वकदाधातोः कर्मण्युपपदे "प्रे दाज्ञः" (३।२।६।) इतिपाणिनीयेन कः प्रत्ययः । भक्तानां स्वाभीष्टपदार्थप्रदायकोऽखिलैश्वर्यशालिनिखिलकल्याणगुणगणको भगवच्छ्रीरघुनाथ एव "जगतः पितरौ रामो जानकी वेदविश्रुतौ । सर्वेशौ सर्वगौ सम्यक् सर्वज्ञौ सर्वदौ शिवौ" ॥ इति वाल्मीकिसहितोक्तेः ।

यथा राज्यसर्वसत्त्वसम्पन्नो राजा स्वसेवकेभ्योऽभिलषितं सर्वमपि पदार्थजातं संप्रदातुमीशः सर्वसत्त्वाधिकारिकत्वेनेतरराजाप्रतीक्षत्वाभावात् । तथैव सर्वलोकाधिपानां स्वामी भवगच्छ्रीरामचन्द्रोऽपि स्वानन्यरूपेणाश्रितानां जनानां सकलवस्तुजातं प्रदातुमीशः । सर्वैश्वर्यशालित्वेन किमपि पदार्थजातानां दुर्लभत्वाभावात् । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनु प्रविश्य सच्च त्यच्चाभवत्" "स एव सृज्यः स च सर्वकर्ता स एव पात्यत्ति च पाल्यते च । ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः । ( वि० पु० १।२।६७ ) "कर्ता सर्वस्य जगतो भर्ता सर्वस्य सर्वगः । सहर्त्ता कार्यजातस्य श्रीरामः शरणं मम ॥" (बृ० ब्र० सहिता) इत्यादिश्रुतिस्मृत्युक्तदिशा भगवतः श्रीरामस्य सङ्कल्पमात्रेणाखिलजगदुत्पत्तिस्थितिप्रलयसम्भवात् ।

किञ्च "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "क्षरं प्रधानममृताक्षर हरः क्षरात्मा नावीशते" इत्यादिश्रुतिप्रामाण्यात् सर्वेश्वरस्य भगवतः कस्मैचिदपि कस्यापि वस्तुजातस्य प्रदानाय परापेक्षत्वाभावाद् भक्ताभीष्टप्रदत्व सुसम्पन्न सकलब्रह्माण्डनायकश्रीरामस्य ।

तदुक्तं महर्षिवाल्मीकिनापि श्रीमद्रामायणे "धनदेन समस्त्यागे" (बा० १।१६) इति। तथैव श्रीसनत्कुमारसंहितायामपि "भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम्" इति। श्रीमद्रामायणयुद्धकाण्डे श्रीब्रह्मणापि "अमोघं दर्शनं राम अमोघस्तव संस्तवः। अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि" (११६।३०) इति। तथैवास्मदाचार्याऽनन्दभाष्यकारैरपि श्रीवैष्णवमताब्जभास्करेऽभिहितम् "भूरिमान्यो वदान्यः" इति। "भक्ताशेषमनोभिवाञ्छितचतुर्वर्गप्रदं स्वद्रु मम्" इति च॥ हरति स्वाश्रितजनानां भवबन्धनरूपमघमिति हरिः। हृञ् हरण इत्यस्मात् "अच इः" (४।१३६) इत्यौणादिकेन, इप्रत्ययः। "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम" इति स्मरणात् कृपाकूपारभगवति श्रीरामे सर्वाभयप्रदत्वमिति भावः।

विभुर्व्यापकः "तदैक्षत बहु स्यां प्रजायेय" (छा० ६।२।३) इति श्रुतेः। व्याख्यातञ्चेयं श्रुतिस्तथैवाऽऽनन्दभाष्यकारैः-तत्सत् शब्दवाच्यं परब्रह्म ऐक्षत ईक्षणं सङ्कल्पं कृतवान् एकोप्यहं बहु विचित्रानन्तजडचेतनमिलितव्यष्टिजगद्रूपेण बहु अनेकरूपः स्यां प्रजायेय प्रकर्षेण जायेय" इति। अतोऽस्मिन् षडैश्वर्यवति श्रीरघुनाथे विभुत्वं सुस्थमिति भावः। साकेताधीश्वरो नित्यधाम-श्रीअयोध्यानायकः "अयोध्यानगरी नित्या सच्चिदानन्दरूपिणी। यस्यांशेन हि वैकुण्ठ-गोलोकादि प्रतिष्ठितम्॥ पूर्णः पूर्णतमः श्रीमान् सच्चिदानन्दविग्रहः। अयोध्यां क्वापि सन्त्यज्य पादमेकं न गच्छति॥" इत्युक्तेः। श्रीर्ज्ञानैश्वर्ययशश्श्रीवैराग्यधर्मरूपषडैश्वर्यमस्या अस्तीति श्रीमती "तदस्यास्त्यस्मिन्निति मतुप्" (५।२।६४) इति पाणिनीयेन मतुपि कृते ङीषि, जानकी वल्लभायस्य "स्त्रियाः पुम्वत्" (६।३।३४) इति पुम्वत्। अथवा "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड् गुणाः। भगत्वेनेरिताः सन्ति श्रीरामे भगवान् स तत्॥" इति श्रीरामभगवत्त्वे जगद्गुरु-श्रीगङ्गाधराचार्येण सन्निरूपितम्। ते च 'अनन्या राघवेणाहं भास्करेण प्रभा यथा" "अनन्या च मया सीता" इत्यादि-

महर्षिवचनात् श्रीभूमिजायायामप्यक्षुण्णरूपेण सन्तीति तादृशी । शेषं पूर्ववत्। श्रीमज्जानक्या वल्लभ इति वा सकलभक्ताभीष्टप्रदमायिकः श्रीरघुनाथ इति यावत् । रामः "रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति राम पदेनासौ परब्रह्माभिधीयते" इति श्रुत्यनुगुणिताखिलचिदचिच्छरीरकः श्रीमद्दाशरथिः । शाश्वतम् निरन्तरमहर्निशमिति यावत् । अव्याद्रक्षेत् "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति स्मरणात् ॥१॥

प्रपन्नानां गतिं ह्येकां जनसन्तारणोत्सुकाम् ।
वात्सल्यरसपूर्णाङ्गीं रामकान्तां सदा भजे ॥२॥

"अनन्या राघवेणाहं भास्करेण प्रभा यथा" इति श्रीमद्रामायणानुमोदितामखिलजडचेतनाधारभूत-श्रीराघवाभिन्नरूपां भूमिजां स्तौति–प्रपन्नानामित्यादि । भगवच्छरणागतानाम् 'त्वमेवासि वित्तं च विद्या त्वमेव, त्वमेवासि माता पितासि त्वमेव । त्वमेवासि हे नाथ सर्वं मम त्वां श्रये राघवं सच्चिदानन्दरूपम्' (श्रीराघवाष्टके श्रीदेवानन्दाचार्याः) इत्युक्तदिशा सर्वतोभावेनाखिलैश्वर्यनायक–श्रीरामप्रतिपन्नानाम् । एकामद्वितीयां गतिमुपायभूतां भगवतीं श्रीभूमिजा एव समस्तशरणागतजनानामेकमात्रोपायस्वरूपेति यावत् । तदुक्तं जगत्कल्याणमयीं श्री–पार्वतीमुद्दिश्य भगवता श्रीशङ्करेण श्रीवाल्मीकिसंहितायाम् "अनिश भगवान् रामो जगन्माता च जानकी । भक्त्या त्वनन्यया देवि ! ध्यातो भक्तं प्रपश्यति" इति । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" (छा० ६–१४–२) इतिश्रुत्यनुसारेण तस्य प्रपन्नस्य कर्मरूपबन्धनारम्समुद्भूतशरीरपातावधिमेवावलोकयन्ति कदा बन्धननाशः प्रपत्स्यते । कर्मबन्धनावधिपूरणस्वरूपपाञ्चभौतिकदेहपाताऽव्यवहितोत्तरकाल एव श्रीसाकेताख्यं दिव्यं धाम लभ्यत इत्यर्थः । तदुक्तं छान्दोग्यानन्दभाष्ये प्रकृतश्रुतिव्याख्याने श्रीमदाचार्यसार्वभौमैः श्रीरामानन्दाचार्यैः "तस्य तावदेव चिरं तस्य जडचेतनशरीरकब्रह्मात्मकतया स्वात्मानं सन्धान-

कुर्वतःपुरुषस्य तावदेव तावत्कालमेव चिरं विलम्बो जायते यावत् यावत्पर्यन्तं प्रारब्धकर्मबलेन प्राप्तशरीरान्न विमोक्ष्ये विमोक्ष्यते, एतत्शरीरपातपर्यन्तमेव विलम्ब इत्यर्थः। अथ शरीरपातादनन्तरं सम्पत्स्ये सम्पत्स्यते सदात्मकब्रह्मप्राप्तो भवतीति भावः" इति। तथा चाचार्याः श्रीवैष्णवमताब्जभाष्करैः-नित्यं सा पुरुषकारभूता श्रीरनपायिनी। अनुपायान्तरैर्विज्ञैरुच्यते तदुपायता ॥९७॥ इति ॥

"अनन्याराघवेणाहं भास्करेण प्रभा यथा" इति महर्षिवचनानुसारेण सर्वदा भगवच्छ्रीरामचन्द्राभिन्नरूपा जगज्जननी श्रीजानकी पुरुषकारस्वरूपा। शरणगतावेवैकनिष्ठा महानुभावा महर्षयः श्रीजनकजामेवोपायतां कथयन्ति। उभयोरैक्यात् श्रीरामचन्द्रवत् श्रीभूमिजां पुरुषकरमेवोपायत्वेन स्वीकुर्वन्तीति भावः। जनानां स्वकर्तव्यविमूढत्वेन-भवार्णवे भूयो भूयो निमज्जमानानां जीवानां सन्तारणे सम्यक्प्रतारणे उत्सुका स्वसन्ततितया क्षिप्रोद्धारणाय पर्यत्सुकचित्ता ताम्। अत एव स्वविपन्नावस्थायामप्यार्यपथभ्रष्टं रावणं प्रति "तेन मैत्रीभवतु ते यदि जीवितुमिच्छसि" इति सुन्दरकाण्डीयवाक्यस्यापि सामञ्जस्यम्। यथा लोके जननी केनचित्कारणवशेन निरस्तमपि स्वांशिशु भृश रोदनादिनाऽर्द्रचित्ता पुनः सम्वाहयति, तथैव श्रीजनकजापि श्रीभगवच्छरणागतिसेवनादिरूपस्वधर्मपालनकतव्यच्युत जनसमूहं स्वसन्ततितयोद्धारणायोत्सुकेतिभावः।

वात्सल्यरसेन वात्सल्याद्यनेकरसेन पूर्णं परिपूर्णमोतप्रोतमङ्गमखिलशरीर यस्याः तां तथोक्ताम्। तदुक्तं वाल्मीकिसंहितायाम्–' माता च जानकी तत्र दिव्यरूपधराऽनघ? नितरां करुणामूर्तिराविर्भूता महेश्वरी" इति। तथा रावणनियुक्तराक्षसीभिर्नितरां चेखिद्यमानाया भूमिजाया हनुमता लोकनायकं श्रीरामचन्द्रं प्रति प्रेष्यमाणसन्देशेनापि वात्सल्यरसपूर्णाङ्गत्वं व्यज्यत एव। तदुक्त महर्षिणा "पापानां वा शुभानां वा वधार्हाणां प्लवगम! कार्यं करुणमार्येण न कश्चिन्नापराध्यति। लोक-

हिंसाविहाराणां रक्षसां कामरूपिणाम् । कुर्वतामपि पापानि नैव कार्य-मशोभनम् ॥" इति ॥ (यु० ११३।४३।४४) तथैव श्री जनकनन्दिन्याः कारुण्यमुपलक्ष्यैवाऽभिहितमाचार्येण श्रीष्णावमताब्जभास्करे 'ऐश्वर्यं-यदपांगसंश्रयमिदं भोग्यं दिगीशैर्जगच्चित्रं चाखिलमद्भुतं शुभगुणा-वात्सल्यनीमा च या" इति हि इति निश्चयबोधकस्तेनाऽवश्यमेव कारुण्य विधास्यतीति विश्वासमुत्पाद्य सदा सेवनीयेति द्योत्यते ।

रामस्य भगवतः श्रीरामचन्द्रस्य कान्ता प्रिया तां दाशरथ्यभिन्न-स्वरूपामिति यावत् । षष्ठीसमासोऽत्राऽभेदार्थे "अनन्या राघवेणाहम्" इत्युक्ते । तथा श्रीश्रुतानन्दाचार्या अपि श्रौतसिद्धान्तविन्दुप्रबन्धे "गुरुं सद्गुणाम्भोधिरामं च नत्वा. तथा राघवाभिन्नरूपां च सीताम्" इति । भजे समाश्रये–अहमिति शेषः ॥२॥

मारुतिं वीरवज्राङ्गं भक्तरक्षणदीक्षितम् ।
हनूमन्तं सदा वन्दे राममन्त्रप्रवर्तकम् ॥३॥

सम्प्रति दास्यभावेन भगवतोऽनन्यसेवक श्रीमारुतिं प्रस्तौति-मारुति-मित्यादि । वज्रस्येवाङ्गं यस्य स चासौ वीरश्चेति तं शूराशनिशरीरकम् । अनेन स्वाश्रितजनरक्षणसामर्थ्यं द्योतितम् । सदा निरन्तरम् । भक्तानां स्वाश्रितानां भगवदाश्रितजनानां वा रक्षणं भक्तरक्षणं भक्तरक्षणे दीक्षितो गृहीतव्रतस्तम् । अनन्यभगवत्सेवकान् स्वाश्रितजनोपद्रवकारिणामुत्सा-दनाय स्वीकृतनियममिति भावः । एतच्च स्वकण्ठरवेणैवोद्घोषितं मारुतिना "यो रामं संस्मरेन्नित्यं भक्त्या मनुपरायण । तस्याऽहमिष्टसिद्ध्यै हि दीक्षितोऽस्मि मुनीश्वराः । वाञ्छितार्थं प्रदास्यामि भक्तानां राघवस्य तु । सर्वथा जागरूकोऽस्मि रामकार्यधुरन्धरः ॥" (हनु० संहिता) रामास्या-खिलब्रह्माण्डनायकचिदचिद्वस्तुस्वरूपिणो मन्त्रस्तारकषडक्षरमहामन्त्र-राजस्त सर्वप्रथमं सर्वजनसुलभतया लोके प्रवर्तयतीति तं, ततः पूर्वं सर्वजीव-सुलभाभावात् । स्वाध्यायपूतानामृषीणां प्रत्युत्तररूपेण महर्षिवाल्मीकिना प्रतिपादिता चेयं वाल्मीकिसंहितायां श्रीमन्त्रराजावतरणप्रक्रिया । तथा हि

"भगवान् रामचन्द्रो वः परं ब्रह्म श्रुतिश्रुतः। दयालुः शरणं नित्यं दासानां दीनचेतसाम् ॥ इमां सृष्टिं समुत्पाद्य जीवानां हितकाम्यया। आद्यां शक्तिं महादेवीं श्रीसीतां जनकात्मजाम् ॥ तारकं मन्त्रराजं तु श्रावयामास ईश्वरः। जानकी तु जगन्माता हनूमन्तं गुणाकरम् ॥ श्रावयामास नूनं स ब्रह्मास्य सुधियां वरम्। तस्माल्लेभे वशिष्ठोऽपि क्रमादस्मादवातरत् ॥" इति। तथा चाऽऽचार्यचरणा अपि गीतानन्दभाष्ये-"श्रीरामं जनकात्मजामनिलजं वेधोवसिष्ठावृषी, योगीशञ्च पराशरं श्रुतिविदं व्यासं जिताक्षं शुकम्। श्रीमन्तं पुरुषोत्तमं गुणनिधिं गङ्गाधराद्यान् यतीञ्छ्रीमद्राघवदेशिकञ्च वरदं स्वाचार्यवर्यं श्रये ॥ इति ॥ अत्रादिपदेन श्रीसदानन्दाचार्य-श्रीरामेश्वरानन्दाचार्य-श्रीद्वारानन्दाचार्य--श्रीदेवानन्दाचार्य-श्रीश्यामानन्दाचार्य--श्रीश्रुतानन्दाचार्य---श्रीपूर्णानन्दाचार्य--श्रीश्रियानन्दाचार्य-श्रीहर्यानन्दाचार्याणां ग्रहणमिति बोध्यम्। एतेन श्रीरामानन्दीयश्रीवैष्णवपरम्परापि दर्शिता भवति। मरुतस्यापत्यं मारुतिस्तं वायुनन्दनं हनुमन्तमहं वन्दे प्रणमामि ॥३॥

रक्षकं श्रुतिशास्त्राणां यमदूतस्य भक्षकम्।
तक्षकं म्लेच्छयूथानां रामानन्दं समाश्रये ॥४॥

निजाचार्यं स्तौति रक्षकमित्यादि। श्रुतयश्च शास्त्राणि च तेषामुपनिषद्-ब्रह्मसूत्रगीतादीनां परैरपव्याख्यानेन नितरां कलुषितानां प्रस्थानत्रयादिसद्ग्रन्थानां श्रुत्यर्थनिरूपकव्याख्यानादिना रक्षकम् परित्राणकम्। तदुक्तमस्मदाचार्यचरणैरेवान्यत्रापि-"नमो भगवते श्रीमद्वैष्णवधर्मरक्षिणे। विजेत्रेऽनन्तसिद्धानां यतीन्द्राय नमो नमः ॥ नमो भगवते श्रीमद्वेदतत्त्वार्थभाषिणे। त्रिमल्लमतसंक्षेत्रे यतीन्द्राय नमो नमः ॥" इति ॥ तथा च जगद्विजयिमहामहोपाध्यायास्मद्गुरुचरणा अपि-परैर्वेदान्तार्थे कलुषितपथं प्रापयति यः, विशिष्टाद्वैताख्यं प्रथितमतमेतत्प्रकटयन्। परप्रत्यग्भेदं श्रुतिशिरसि सिद्धं विशदयन्, यती रामानन्दः स हि सुगुणसिन्धुर्विजयते।

महर्षिवचनात् श्रीभूमिजायायामप्यक्षुण्णरूपेण सन्तीति तादृशी । शेषं पूर्ववत्। श्रीमज्जानक्या वल्लभ इति वा सकलभक्ताभीष्टप्रदभार्यकः श्रीरघुनाथ इति यावत् । रामः "रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति राम पदेनासौ परब्रह्माभिधीयते" इति श्रुत्यनुगुणिताखिलचिदचिच्छरीरकः श्रीमद्दाशरथिः । शाश्वतम् निरन्तरमहर्निशमिति यावत्। अव्याद्रक्षेत् "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति स्मरणात् ॥१॥

प्रपन्नानां गतिं ह्येकां जनसन्तारणोत्सुकाम् ।
वात्सल्यरसपूर्णाङ्गीं रामकान्तां सदा भजे ॥२॥

"अनन्या राघवेणाहं भास्करेण प्रभा यथा" इति श्रीमद्रामायणानुमोदितामखिलजडचेतनाधारभूत-श्रीराघवाभिन्नरूपां भूमिजां स्तौति–प्रपन्नानामित्यादि । भगवच्छरणागतानाम् 'त्वमेवासि वित्तं च विद्या त्वमेव, त्वमेवासि माता पितासि त्वमेव । त्वमेवासि हे नाथ सर्वं मम त्वां श्रये राघवं सच्चिदानन्दरूपम्' (श्रीराघवाष्टके श्रीदेवानन्दाचार्याः) इत्युक्तदिशा सर्वतोभावेनाखिलैश्वर्यनायक–श्रीरामप्रतिपन्नानाम् । एकामद्वितीयां गतिमुपायभूतां भगवती श्रीभूमिजा एव समस्तशरणागतजनानामेकमात्रोपायस्वरूपेति यावत् । तदुक्तं जगत्कल्याणमयीं श्री–पार्वतीमुद्दिश्य भगवता श्रीशङ्करेण श्रीवाल्मीकिसंहितायाम् "अनिश भगवान् रामो जगन्माता च जानकी । भक्त्या त्वनन्यया देवि ! ध्यातो भक्तं प्रपश्यति" इति । "तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सम्पत्स्ये" (छा० ६–१४–२) इतिश्रुत्यनुसारेण तस्य प्रपन्नस्य कर्मरूपबन्धनात्समुद्भूतशरीरपातावधिमेवावलोकयन्ति कदा बन्धननाशः प्रपत्स्यते । कमबन्धनावधिपूरणस्वरूपपाञ्चभौतिकदेहपाताऽव्यवहितं तत्काल एव श्रीसाकेताख्यं दिव्य धाम लभ्यत इत्यर्थः। तदुक्तं छान्दोग्यानन्दभाष्ये प्रकृतश्रुतिव्याख्याने श्रीमदाचार्यसार्वभौमैः श्रीरामानन्दाचार्यैः "तस्य तावदेव चिरं तस्य जडचेतनशरीरकब्रह्मात्मकतया स्वात्मानं सन्धानं-

कुर्वतःपुरुषस्य तावदेव तावत्कालमेव चिरं विलम्बो जायते यावत् यावत्पर्यन्तं प्रारब्धकर्मबलेन प्राप्तशरीरान्न विमोक्ष्ये विमोक्ष्यते, एतत्शरीरपातपर्यन्तमेव विलम्ब इत्यर्थः। अथ शरीरपातादनन्तरं सम्पत्स्ये सम्पत्स्यते सदात्मकब्रह्मप्राप्तो भवतीति भावः" इति। तथा चाचार्याः श्रीवैष्णवमताब्जभाष्करै-नित्यं सा पुरुषकारभूता श्रीरनपायिनी। अनुपायान्तरैर्विज्ञैरुच्यते तदुपायता ॥९७॥ इति ॥

"अनन्याराघवेणाहं भास्करेण प्रभा यथा" इति महर्षिवचनानुसारेण सर्वदा भगवच्छ्रीरामचन्द्राभिन्नरूपा जगज्जननी श्रीजानकी पुरुषकारस्वरूपा। शरणगतावेवैकनिष्ठा महानुभावा महर्षयः श्रीजनकजामेवोपायतां कथयन्ति। उभयोरैक्यात् श्रीरामचन्द्रवत् श्रीभूमिजां पुरुषकरमेवोपायत्वेन स्वीकुर्वन्तीति भावः। जनानां स्वकर्तव्यविमूढत्वेनभवार्णवे भूयो भूयो निमज्जमानानां जीवानां सन्तारणे सम्यक्प्रतारणे उत्सुका स्वसन्ततितया क्षिप्प्रोद्धारणाय पर्यत्सुकचित्ता ताम्। अत एव स्वविपन्नावस्थायामप्यार्यपथभ्रष्टं रावणं प्रति "तेन मैत्रीभवतु ते यदि जीवितुमिच्छसि" इति सुन्दरकाण्डोयवाक्यस्यापि सामञ्जस्यम्। यथा लोके जननी केनचित्कारणवशेन निरस्तमपि स्वांशिशु भृश रोदनादिनाऽर्द्रचित्ता पुनः सम्वाहयति, तथैव श्रीजनकजापि श्रीभगवच्छरणागतिसेवनादिरूपस्वधर्मपालनकतव्यच्युत जनसमूहं स्वसन्ततितयोद्धारणायोत्सुकेतिभावः।

वात्सल्यरसेन वात्सल्याद्यनेकरसेन पूर्ण परिपूर्णमोतप्रोतमङ्गमखिलशरीर यस्याः तां तथोक्ताम्। तदुक्तं वाल्मीकिसहितायाम्–" माता च जानकी तत्र दिव्यरूपधराऽनघ? नितरां करुणामूर्तिराविभूता महेश्वरी" इति। तथा रावणनियुक्तराक्षसीभिर्नितरां चेखिद्यमानाया भूमिजाया हनुमता लोकनायक श्रीरामचन्द्रंप्रति प्रेष्यमाणसन्देशेनापि वात्सल्यरसपूर्णाङ्गत्वं व्यज्यत एव। तदुक्त महर्षिणा "पापानां वा शुभानां वा वधार्हाणां प्लवगम! कार्य करुणमार्येण न कश्चिन्नापराध्यति ॥ लोक-

हिंसाविहाराणां रक्षसां कामरूपिणाम् । कुर्वतामपि पापानि नैव कार्य-मशोभनम् ॥" इति ॥ (यु० ११३।४३।४४) तथैव श्री जनकनन्दिन्याः कारुण्यमुपलक्ष्यैवाऽभिहितमाचार्येण श्रीग्रात्ममताब्जभास्करे 'ऐश्वर्यं-यदपांगसश्रयमिदं भोग्यं दिगीशैर्जगच्चित्र चाखिलमद्भुतं शुभगुणा-वात्सल्यसीमा च या" इति हि इति निश्चयबोधकस्तेनाऽवश्यमेव कारुण्य विधास्यतीति विश्वासमुत्पाद्य सदा सेवनीयेति द्योत्यते ।

रामस्य भगवतः श्रीरामचन्द्रस्य कान्ता प्रिया तां दाशरथ्यभिन्न-स्वरूपामिति यावत् । षष्ठीसमासोऽत्राऽभेदार्थे "अनन्या राघवेणाहम्" इत्युक्ते । तथा श्रीश्रुतानन्दाचार्या अपि श्रौतसिद्धान्तविद्प्रबन्धे "गुरुं सद्गुणाम्भोधिरामं च नत्वा. तथा राधवाभिन्नरूपां च सीताम्" इति । भजे समाश्रये–अहमिति शेषः ॥२॥

मारुतिं वीरवज्राङ्गं भक्तरक्षणदीक्षितम् ।
हनूमन्तं सदा वन्दे राममन्त्रप्रवर्तकम् ॥३॥

सम्प्रति दास्यभावेन भगवतोऽनन्यसेवक श्रीमारुतिं प्रस्तौति-मारुति-मित्यादि । वज्रस्येवाङ्गं यस्य स चासौ वीरश्चेति तं शूराशनिशरीरकम् । अनेन स्वाश्रितजनरक्षणसामर्थ्यं द्योतितम् । सदा निरन्तरम् । भक्तानां स्वाश्रितानां भगवदाश्रितजनानां वा रक्षणं भक्तरक्षणं भक्तरक्षणे दीक्षितो गृहीतव्रस्तम् । अनन्यभगवत्सेवकान् स्वाश्रितजनोपद्रवकारिणामुत्सा-दनाय स्वीकृतनियममिति भावः । एतच्च स्वकण्ठरवेणैवोद्घोषितं मारुतिना "यो राम संस्मरेन्नित्यं भक्त्या मनुपरायण । तस्याऽहमिष्टसिद्ध्–यै हि दीक्षितोऽस्मि मुनीश्वराः ॥ वाञ्छितार्थं प्रदास्यामि भक्तानां राघवस्य तु । सर्वथा जागरूकोऽस्मि रामकार्यधुरन्धरः ॥" (हनु० संहिता) रामास्या-खिलब्रह्माण्डनायकचिदचिद्वस्तुस्वरूपिणो मन्त्रस्तारकषडक्षरमहामन्त्र-राजस्त सर्वप्रथमं सर्वजनसुलभतया लोके प्रवर्तयतीति तं, ततः पूर्वं सर्वजीव-सुलभाभावात् । स्वाध्यायपूतानामृषीणां प्रत्युतररूपेण महर्षिवाल्मीकिना प्रतिपादिता चेयं वाल्मीकिसंहितायां श्रीमन्त्रराजावतरणप्रक्रिया । तथा हि

"भगवान् रामचन्द्रो वः परं ब्रह्म श्रुतिश्रुतः । दयालुः शरणं नित्यं दासानां दीनचेतसाम् ।। इमां सृष्टिं समुत्पाद्य जीवानां हितकाम्यया । आद्यां शक्ति महादेवीं श्रीसीतां जनकात्मजाम् ।। तारकं मन्त्रराजं तु श्रावयामास ईश्वरः । जानकी तु जगन्माता हनूमन्तं गुणाकरम् ।। श्रावयामास नूनं स ब्रह्माणं सुधियां वरम् । तस्माल्लेभे वशिष्ठर्षिः क्रमादस्माद-वानरत् ।।" इति । तथा चाऽऽचार्यचरणा अपि गीतानन्दभाष्ये-"श्रीरामं जनकात्मजामनिलजं वेधोवसिष्ठावृषी, योगीशञ्च पराशरं श्रुतिविदं व्यासं जिताक्षं शुकम् । श्रीमन्तं पुरुषोत्तमं गुणनिधिं गंगाधराद्यान् यतीञ्छ्रीम-द्राघवदेशिकञ्च वरदं स्वाचार्यवर्यं श्रये ।। इति ।। अत्रादिपदेन श्रीसदा-नन्दाचार्य–श्रीरामेश्वरानन्दाचार्य–श्रीद्वारानन्दाचार्य––श्रीदेवानन्दाचार्य–श्रीश्यामानन्दाचार्य––श्रीश्रुतानन्दाचार्य––श्रीपूर्णानन्दाचार्य––श्रीश्रियानन्दाचार्य–श्रीहर्यानन्दाचार्याणां ग्रहणमिति बोध्यम् । एतेन श्रीरामानन्दीयश्रीवैष्णवपरम्परापि दर्शिता भवति । मरुतस्यापत्यं मारुतिस्तं वायुनन्दनं हनुमन्तमहं वन्दे प्रणमामि ।।३।।

रक्षकं श्रुतिशास्त्राणां यमदुःखस्य भक्षकम् ।
तक्षकं म्लेच्छयूथानां रामानन्दं समाश्रये ।।४।।

निजाचार्यं स्तौति रक्षकमित्यादि । श्रुतयश्च शास्त्राणि च तेषा-मुपनिषद्-ब्रह्मसूत्रगीतादीनां परैरपव्याख्यानेन नितरां कलुषितानां प्रस्थान-त्रयादिसद्ग्रन्थानां श्रुत्यर्थनिर्णायिकव्याख्यानादिना रक्षकम् परित्राणकम् । तदुक्तमाचार्यचरणैनैवान्यत्रापि–नमो भगवते श्रीमद्वैष्णवधर्मरक्षिणे । विजेत्रेऽनन्तसिद्धानां यतीन्द्राय नमो नमः ।। नमोऽभगवते श्रीमद्वेदतत्त्वार्थभाषिणे । निगमागमरक्षित्रे यतीन्द्राय नमो नमः ।।" इति ।। तथा च जगद्विजयिमहामहोपाध्यायास्मद्गुरुचरणा अपि-परैर्वेदान्तार्थे कलुषितपथं प्रापयति यः, विशिष्टाद्वैताख्यं प्रथितमतमेतत्प्रकटयन् । परप्रत्यग्भेदं श्रुतिशिरसि सिद्धं विशदयन्, यती रामानन्दः स हि सुगुणसिन्धुर्विजयते ।

इति ॥ तथैवाभियुक्ता अपि-आचार्यः सार्वभौमोऽथ प्रस्थानत्रयभाष्य-कृत्" इति ॥

यमस्य दुःखं यमदुःखं तस्य सम्बन्धार्थे षष्ठी यमसम्बन्धिक्लेशस्य भक्षकं सदुपदेशादिना जनान् सन्मार्गे प्रवर्त्तनान्नाशकं हरणकर्तारमिति-भाव.। म्लेच्छानां यवनानां यूथाः समूहास्तेषां तक्षकं नाशकर्तारम्। तस्मिन् काले यवनानामत्युत्पीडनमासीत्स्वयोगबलेन तीर्थाटनव्याजेन सर्वभुवं परिभ्रमन् सच्छास्त्रप्रचारेण सदुपदेशादिना च भारताभिजनान् स्वस्थीचकारेति-इतिहासप्रसिद्धमेतन्नतिरोहितमितिहासविदाम्। आनन्द-नमानन्दः रामिति बीजनिर्दिष्टे प्रतिपाद्ये वा यस्य स रामानन्द-स्तं स्वगुरुम्। अथवा रामं दाशरथिं रहस्यत्रयानुष्ठानेनाऽनन्दयतीति रामानन्दः, यद्वारामिति बीजसम्बोध्यं प्रयतानुष्ठानेनाऽनन्दयतीति-रामानन्दः। रामे दाशरथौ तेषां करुणाद्यनन्तगुणानां शरण्यत्वादिचिन्ता-दिनाऽऽनन्दो यस्येति वा, सत्यभामा भामा सत्येतिवद् विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप इति नियमेन रामान् रामभक्तान् अनन्तानन्दसुर-सुरानन्दप्रभृतीन् प्रस्थानत्रयानन्दभाष्यादिसदुपदेशेनाऽनन्दयतीति रामा-नन्दः। यद्वा रामभक्तेषु तेषां दर्शनसत्सङ्गादिनाऽऽनन्दो यस्य स रामा-नन्दः। "सुन्दरी रमणी रामा कोपना सैव भामिनी" इति कोशादतिशय-सौन्दर्यलावण्यवती रामा सीता, सीता च रामश्चेति रामौ "प्रमान् स्त्रि-या" (पा० १।२।६७) इत्येकशेषस्तौ स्वानुष्ठानादिनाऽऽनन्दयतीति रामानन्दः। श्रीसीतारामयोः पृथक् पृथगनन्तगुणादिकीर्तनेनानन्दो यस्य स रामाननन्दस्तम्। प्रस्थानत्रयादिसुभाष्यनिर्माणेनाऽखिललोको-पकर्तारं स्वगुरुमहं समाश्रये सेवे ॥४॥

सीतानाथसमारम्भां श्रीबोधायनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥५॥

स्वाचार्यपरम्परां दर्शयति-सीतानाथेत्यादिद्वारा। सीतायाः श्रीजन-कनन्दिन्या नाथः कान्तस्तमारभ्य सम्यक् प्रवृत्ता परम्परा यस्या सा ताम्

"श्रीरामं जनकात्मजामनिलजम्" इत्याद्याचार्योक्तेः। तपसैश्वर्यवृत्तिनिर्माणादिविपुलकीर्तिरूपश्रिया सहितो बोधायनो ब्रह्मसूत्राणां बोधायनवृत्तिकारः श्रीपुरुषोत्तमाचार्यः, अभिहितं च श्रीसदानन्दाचार्यैः—रामो ब्रह्मपरात्परं श्रुतिमतं भक्त्यैवनिःश्रेयसम्,शेषा येन च शेषिणो रघुपतेर्जीवा इति स्वीकृतम्। श्रौत युक्तियुत मतं खलु विशिष्टाद्वैतकं यस्य स, श्रीबोधायनवृत्तिकृद्विजयतां बोधायनः शाश्वतम् इति ॥ मध्ये मध्यवर्त्याचार्यो यस्यास्ताम्। "मध्यान्मः" (४।३।८) इति मप्रत्ययः। एतादृशीमस्मदाचार्यपर्यन्तां स्वाचार्य जगद्गुरुश्रीस्वामिरामानन्दाचार्योऽन्तेऽवमाने यस्यास्तां गुरुपरम्परामाचार्यपरम्परां वन्दे प्रणमामि। एतेन स्वसिद्धान्तः श्रीरामानन्दीयश्रीवैष्णवसम्प्रदायानुयायिनामाचार्यपरम्परा च निर्णीता इति वेदितव्यम् ॥५॥

धर्ममार्गच्युता मूर्खा अज्ञानध्वान्तपीडिताः।
प्राप्नुवन्त्वचिरान्मार्गं लब्ध्वा सिद्धान्तदीपकम् ॥६॥

प्रकृतग्रन्थनिर्माणप्रयोजनं प्रदिशन्त्याचार्या धर्ममार्ग....इति। अज्ञानमेव कर्तव्याकर्तव्यविवेकहीनमेव ध्वान्तमन्धकारस्तेन पीडिता व्यथिता अत एव धर्ममार्गच्युता धर्मस्य मार्गो धर्ममार्गः, धर्म एव मार्गो वा तस्माच्च्युता भ्रष्टाः। इतरवादविवादेन कः श्रेयः पन्था इति निश्चयमलभमाना इति शेषः। एतादृशा ये मूर्खा दीनाः सदसद्विवेकशक्तिरहिता इति भाव.। ते च सिद्धान्तदीपकमखिलश्रुतिस्मृतिसामञ्जस्यादाचार्यैर्भाष्यादौ निर्णीता अर्थाः सिद्धान्तास्तेषां दीपकः प्रकाशकः प्रकृतलघुप्रबन्धस्तम्। अनेनाऽऽचार्याणां मतप्रकाशनपरोऽयमायासो न तु स्वतन्त्रो यत्न इति व्यज्यते। लब्ध्वा समासाद्याऽचिरात् शीघ्रमेवमार्गम्—वनादिवैदिकविशिष्टाद्वैतरूपपथं प्राप्नुवन्त्वासादयन्तु ॥६॥

आनन्दभाष्यकार-श्रीरामानन्दजगद्गुरोः।
सिद्धान्तो वैदिको मान्यो विशिष्टाद्वैतनामकः ॥७॥

इदानीं स्वाचार्यसिद्धान्तं प्रदर्शयति—आनन्देति। भाष्यते

मत्रार्थो येनेति भाष्यम् 'भाष व्यक्तायां वाचीति धातोः "कृत्यल्युटो बहुलम' इत्यनुशासनेन ण्यत् । सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदोविदु–इत्यनुशासनाऽविरुद्धम् । आनन्दयतीत्यानन्दष्टुनदि समृद्धावित्यतो घञ्प्रत्ययेन निष्पन्न आनन्दशब्दः । आनन्दश्चासौ भाष्य चेत्यानन्दभाष्यं तत् करोतीत्यानन्दभाष्यकारः । ब्रह्मसूत्राख्यशारीरकमीमांसायाः सर्वोत्कृष्टानन्दाख्यरामानन्दभाष्यकर्तेत्यर्थः । व्यज्यते चास्मद्गुरुचरणानां जगद्विजयिसर्वतन्त्रस्वतन्त्रमहामहोपाध्याय––श्रीस्वामिरघुवराचार्य–वेदान्तकेसरिमहाभागानामानन्दभाष्यतत्त्वप्रकाशिकाभूमिकातोऽपि सर्वोत्कृष्टत्वं तस्य । तथा हि-अथास्यानन्दभाष्यस्येतरेभ्योऽखिलेभ्य एव भाष्येभ्यो वरीवर्त्युत्कृष्टत्वम् । नह्यत्र विवादलेशः । तथा हि कस्मिंचिद् भाष्ये केवलं वृत्तिरिवैव सूत्रार्थो वर्णितः, क्वचिच्चावेशवशाद्विशेषनिर्देशेन महता सन्दर्भेण संरम्भेण च परमतनिराकरणं, जिज्ञासितार्थनभिधानञ्च । क्वचिदुक्तस्यैवार्थस्यासकृद्वर्णनेन पौनरुक्त्यम् । क्वचिच्च भाष्यान्तरानुकृतिमुपसृत्यापरमतनिराकरणम् । एतत्सर्वमस्मिन् भाष्ये लेशतोऽपि नोपलभ्यते । अत्र तु भगवत्पादाः श्रीमदाचार्याः सूत्रकारीयाभिमतभावगर्भया नैसर्गिकप्रसादविशदगभीरया गिरा व्याचख्युः सर्वमपि प्रशस्तार्थशास्त्रम्' इति । अन्दभाष्यमितिनामकरणे बीजमपि तत्रैव 'भगवत्पादैरस्य भाष्यस्य 'आनन्दभाष्यम्' इतिनाम्ना प्रसिद्धिरकारि । अस्याभिप्रायस्त्वेवमनुमिनुमः–

ब्रह्मण आनन्दगुणसागरत्वादानन्दपदेन व्यपदेशो दृश्यते 'तद्गुणसागरत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (ब्र० सू० २।३।३०) इतिपरमर्षानुशासनात् । अत एव "आनन्दो ब्रह्म व्यजानात्""कोह्येवान्यात्कः प्राण्याद् यद्येष आकाश आनन्दो नस्यात्" 'आनन्दादेव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति" इत्याद्याः श्रुतयः सगच्छन्ते । अयमर्थश्च विस्तरेणानन्दमयाधिकरणेऽभ्यधायि प्रमाणबाहुल्येन श्रीमदाचार्येण । तत एव च हेतोरानन्दपदाभिधेयब्रह्म-

नाम्नास्य भाष्यस्य ख्यातिरुपादर्शि श्रीमदाचार्यधुरीणैरिति । यदि त्वियं ख्यातिस्तदीयेतरजनैरेवोदपादि न भगवत्पादैस्तदा 'श्रीरामानन्द' इति भाष्यकृत्नामघटकानन्दपदमादायैव भवेत् । 'शांकरभाष्यम्' 'रामानुज भाष्य' मितिवदानन्दभाष्यमित्यपि युक्तमेव । अत्र च "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वालोपो वाच्य.:" इत्यनुशासनेन पूर्वपदस्प लोपे 'आनन्द' पदेन श्रीरामानन्द एवाभिधीयते भामेतिवत् । एवञ्चानन्दभाष्यमिति-सहेतुकमेवास्याभिधानमुपपद्यतेतराम्" इति । स चासौ श्रीरामानन्दः स्वाभिधानेनैव जगत्प्रसिद्धः श्रीमद्राघवानन्दाचार्यसच्छिष्यः स एव जगद्-गुरुर्जगतां गुरुर्जगदगुरुः । वैदिकसनातनार्यपथमुत्सृज्यान्वेतमसि निमज्जन-शीलानां सर्वजागतिकजनानां भगवत्प्राप्त्युपायभूतां पराभक्ति समुपदिश्य हृदन्धकारं विनाशितवन्त इति युक्तमेव जगद्गुरुत्व तेषाम् । अन्या-चार्याणां वर्णैकदेशमात्रे शिक्षादीक्षादिव्यवहारदर्शनाद् व्यभिचरितो-पाधिर्जगद्गुरुरिति येषान्तु तादृग्दोषाभावादव्यभिचरितत्व मुपाधिरिति भावः । "गुकारश्चान्धकारश्च रुकरस्तन्निवर्तकः । अन्धका-रविरोधित्वाद् गुरुरित्यभिधीयते" इत्यभियुक्तोक्तत्वाच्च । तस्य विशि-ष्टाद्वैतनामकः=द्वयोर्भावोद्विता द्वितैवेति द्वैतम् । नद्वैतमद्वैतम् । विशिष्टञ्च विशिष्टञ्च विशिष्टे विशिष्टयोरद्वैतं विशिष्टाद्वैतं विशिष्टाद्वैतं नाम यस्येति विग्रहः । अत्र प्रथमविशिष्टशब्देन सूक्ष्मचिदचिद्विशिष्टब्रह्मणो ग्रहणम् द्वितीयविशिष्टशब्देन च स्थूलचिदचिद्विशिष्टब्रह्मणो ग्रहणमिति बोध्यम् । अनयोरैक्य-मेवोक्तसिद्धान्तः स एव चाचार्यपादानां सिद्धान्तः । "एवं चाखिलश्रुति स्मृतीतिहासपुराणसामञ्जस्यादुपपत्तिबलाच्च विशिष्टाद्वैतमेवास्य मीमांसाशास्त्रस्य विषयो न तु केवलाद्वैतम्" (आनन्दभाष्यम् १।१।१) इत्याचार्यचरणै रेवोपपादितत्वात् ।

कार्यकारणब्रह्मणोरैक्यं हि विशिष्टाद्वैतशब्दार्थः । नामरूपविभा-गायोग्यचिदचिद्विशिष्टब्रह्म तु कारण ब्रह्म । नामरूपविभागयोग्य चिद-

चिद्विशिष्टब्रह्म च कार्यब्रह्म। विशेषणविशेष्यपदार्थश्च विशिष्ट-शब्दार्थः। चिदचिदर्थौ जीवप्रकृती च ब्रह्मणोऽपृथक्सिद्धविशेषणे। ब्रह्म च विशेष्यमित्यवधेयम्। सर्वथा चिदचिद्रूपविशेषणत्वेन वर्तमानत्वाच्चिदचिद्विशिष्टब्रह्म इति परब्रह्मणः श्रीरामस्याख्या प्रसिद्धा। प्रलयावस्थायां चिदचिद्विशिष्टब्रह्मणः कारणब्रह्मत्वाभिधानं तु तस्मिन् सूक्ष्मत्वेन नामरूपानर्हत्वात्। सृष्टयवस्थायां चिदचिद्विशिष्टब्रह्मणः कार्यब्रह्मत्वाभिधानमपि सृष्टिदशायां नामरूपादियोग्यत्वादेवेति बोध्यम्। निर्विशेषब्रह्म तु प्रत्यक्षानुमानागमप्रमाणैः साधयितुमशक्यत्वात्सविशेषब्रह्म एव सर्वदातिष्ठतीति ज्ञेयम्। कार्यकारणब्रह्मणोरैक्यं, सूक्ष्मचिदचिद्विशिष्ट स्थूलचिदचिद्विशिष्ट ब्रह्मणोरैक्यं विशिष्टाद्वैतमिति चाभेदार्थपराः शब्दाः। अविकलस्वरूपं तु "चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम्। तत्कदाचित्स्वस्मात्स्वशरीरतयाऽपि पृथग्व्यपदेशानर्हं सूक्ष्मदशापन्नचिदचिद्वस्तुशरीरम्। तत्कारणावस्थं ब्रह्म। कदाचिच्चविभक्तनामरूपव्यवहारार्हस्थूलदशापन्न-चिदचिद्वस्तु शरीरम्। तच्च कार्यावस्थमिति कारणात्परस्माद् ब्रह्मणः कार्यरूपं जगदनन्यच्छरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायां च श्रुतिशतसिद्धया स्वभावव्यवस्थया च गुणदोषव्यवस्था "न तु दृष्टान्ताभावात्" (ब्र० सू० २।१।६) इत्यत्रोक्ता बोध्येति" (आनन्दभाष्यम् २।१।१४) इत्याद्याकारग्रन्थतोऽवसेयं विशेषजिज्ञासुभिरित्यत्र संक्षेपः। वैदिकोवेदप्रतिपाद्यः सिद्धान्तः श्रुतिस्मृतीतिहासपुराणवचनादियुक्तिप्रत्युक्तिद्वारानिश्चितार्थः। भवभीरुभिर्मोक्षार्थिभिर्मान्यः सेवनीयोऽनुकरणीयो वेत्यवधेयम् ॥७॥

शास्त्रश्रुतेश्च सत्सङ्गादात्मप्रबोधनादपि।
स्वभावदूषिता लोके न शुध्यन्ति कदाचन ॥८॥

शास्त्राणां श्रुतिः शास्त्रश्रुतिस्तस्माद् धर्मशास्त्रसेतिहासगीता-

मनुस्मृत्यादिसद्ग्रन्थानां श्रवणात्। सतांसज्जनानां सङ्गः सत्सङ्गस्तस्मात्। आत्मनां प्रबोधन मात्मप्रवोधनं तस्माच्च। स्वभावेन दूषिताः स्वभावदूषिता निसर्गभिभूतजना लोकेऽमुस्मिन् संसारे कदाचन कदापि काले न शुध्यन्ति। 'न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः। स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः॥' इत्युक्तदिशेति भावः। सकलजीवमात्रैकशरणभगवत्प्रपत्त्यङ्गीकारं विना स्वस्थान्तःकरणा न भवन्तीत्यर्थः।८॥

प्रीतिर्नैसर्गिकी कार्या ह्युत्तमश्लोकवल्लभे।
विषयासक्तजीवानां नानुरक्तिः कदाचन॥९॥

भगवत्परायणतामभिलषद्भिः ससारसागरे निमग्नजीवैः किं कर्तव्यमित्याह-प्रीतिरिति। उत्तमश्लोकवल्लभे उत्तमश्लोकानां शुकनारदप्रभृतिपरमभागवतानां वल्लभे भगवच्छ्रीरामचन्द्रे एव नैसर्गिकी स्वाभाविकी प्रीतिर्विशिष्टानुरागः कार्या। विषयासक्तजीवानां विषिन्वन्ति निबध्नन्तीन्द्रियाणीति विषयाः षिञ् बन्धने धातोः "पचाद्यच्" (३।३।१३४) इति पाणिनीयेनाचि "परिनिवि" (८।३।७०) इति षत्वं, रूप, रस, गन्ध स्पर्शादयस्तेष्वासक्तानां तद्गतान्तरात्मनां जीवानां शरीरिणां कदाचन कदापि कालेऽनुरक्तिर्विशेषानुरागो न कर्तव्यः। हीयते हि मतिस्तात! हीनैः सह समागमात्। समैश्च समतामेति विशिष्टैश्चविशिष्टताम्–इतिन्यायादिति भावः॥९॥

पूरयेदष्टगन्धेन सिञ्चयेत्पुष्पवारिणा॥
खलवद्दुग्रगन्धञ्च पलाण्डुर्नैव मुञ्चति॥१०॥

खलानां सङ्गतिः कथं न कार्यमिति दृष्टान्तेन बोधयति पूरयेदिति। यद्यप्यष्टगन्धेन–केशरकस्तूर्याद्यष्टगन्धेन पूरयेत् प्रपूरयेत् प्रक्षालयेद्वा तथैव पुष्पवारिणा मूकञ्जादिप्रसूनतोयेन सिञ्चयेदभिषिक्तं कुर्यात्।

तथापि पलाण्डुः सुकन्दकः (प्याज इति हिन्दी) खलवद् दुष्टपुरुषवत् स्वोग्रगन्धं स्वदुष्टस्वभावञ्च कदापि नैव मुञ्चति। यथाष्टगन्धादिना प्रक्षालनेनापि पलाण्डुगन्धमुत्सारयितुं न शक्यते तथा खलजनस्वभावमपि वेदाध्ययनसदुपदेशादिना वा परावर्तयितुमशक्यमृते श्रीरामचन्द्रानुकुल्यादिति भावः ॥१०॥

लौकिकीनां हि वृत्तीना दैहिकीनां च सिद्धये ।
उदासीनेन चित्तेनेतरेषामल्पसङ्गतिः ॥११॥

ननु समेषामेव लौकिकजीवानां सङ्गतिर्निषिद्धा कथं तर्हि वर्त्तितव्यमित्यत आह–लौकिकीनामिति । लौकिकीनां लोके भवानां दैहिकीनां देहसम्बन्धिनीनां च वृत्तीनां पारस्परिकव्यवहाराणां सिद्धये स्वकार्यनिवृत्तये । उदासीनेन–उदास्ते शत्रुमित्राभ्यां परस्ताटस्थ्येन स्थीयत इत्युदासीनस्तेन हानिलाभादिसर्वककार्येष्वपि समरूपेण चित्तेनान्तःकरणेनेतरेषां विषयासक्तजीवपुरुषभिन्नानां वैष्णवानामल्पसङ्गतिः स्वल्पसंसर्गो विधेयो येन स्वत्वव्याघातो न स्यादिति भावः ॥११॥

विषयातुरजीवानां कुर्वन्त्यात्मविशोधनम् ।
स्वाध्यायव्रतसत्तीर्थदानयज्ञपांसि हि ॥१२॥

अथ विषयासक्तजीवानां कथं विमुक्तिः स्यादित्यात्मशोधनोपायं निर्दिशति विषयेति । तं विना च स्वात्मयाथात्म्यज्ञानाभावेन परभक्तिप्राप्तुमशक्यत्वात् । विहाय च तां जीवानां भगवत्प्राप्तये गत्यन्तराभावात् । स्वाध्यायव्रतसत्तीर्थदानयज्ञतपांसि=स्वाध्यायो वेदाद्यध्ययनं 'स्वाध्यायोऽध्येतव्यः' इति श्रुतेः । व्रतानि श्रीरामनवमीचान्द्रायणैकादश्यादिव्रतानि, सत्तीर्थानि=अयोध्याप्रयागराजप्रभृतितीर्थस्थानानि, दानानि सत्पात्रसमर्पितविश्राणनादीनि, यज्ञानि जपानुष्ठानादीनि 'यज्ञानां जपयज्ञोऽस्मि' इति स्मृतेः तथा तपांसि हिमवातातपसहानि तपश्चर्यादीनिसाधनानि, विषयातुरजीवानाम्गन्धादिविषयासक्तमनुष्याणाम् । आत्म-

विशोधनम् = आत्मनां विशोधनं विशेष्य प्रक्षालनं स्वच्छीकरणं वा कुर्वन्ति सम्पादयन्ति । हिशब्द आत्मशोधने हेत्वन्तराभावं व्यनक्ति ॥१२॥

किन्त्वात्मशोधने ह्येते न स्वतन्त्राः कदाचन ।
भगवत्कृपया युक्ताः शक्ताः स्युरात्मशुद्धये ॥१३॥

उक्तात्मशोधनोपायाः स्वातन्त्र्येणात्मशोधनेऽसमर्थाः, किन्तु भगवत्कृपयैवेति निर्दिशति–किन्त्विति । एते वेदाध्ययनादिपदार्थाः । आत्मशोधने आत्मनः परिशुद्धये कदाचन कदापि काले स्वतन्त्राः न सन्ति न भवन्ति । भगवत्कृपया = भगवतः श्रीरामस्यासीमानुकम्पया युक्ताः सन्तः आत्मशुद्धये शक्ताः स्युः स्वात्मशोधने समर्था भवन्तीत्यर्थः ।

अयमाशयः—भगवत्प्राप्त्यनन्तरं वास्तविकस्वरूपज्ञानानन्तरमेवात्मनां शुद्धिर्भवति सा च केवलस्वाध्यायायादेव न निष्पद्यते किन्त्वनन्यानुरागसंवलितसाधनादेवेति—"नायमात्मा प्रवचनेनलभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" (मु० ३।२।३) इति श्रुतितो ज्ञायते । भगवन्तो भाष्याकाराः प्रकृतश्रुत्यर्थमेवं प्रकटयामासुरानन्दभाष्ये—"अयमर्थः "यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि हिरण्य निधापयतु चेतव्यम् ।" इत्यादौ केवलपृथिव्याद्यधिकरणकाग्निचयनं निषिध्य हिरण्यस्थापनपूर्वकं तद्विधीयते । तथात्रापि केवलेन प्रवचनसाधनेन मननेन श्रवणेन वेदमात्मस्वरूपं नासाद्यते । अपितु निरतिशयप्रेमविशिष्टेनैव, एष आत्मा यं प्रतिविशिष्टं पुरुष वृणुते स्वीकरोति तेनैव पुरुषविशेषेणायं लभ्यः । स्वीक्रियमाणता च स्वविषयकाखण्डानुरागवत्त्वेव जायते, इति लोक व्यवहारः" ( आ० भा० ।१।१ ) इति । अतो भगवत्प्रपत्तिं विनाऽऽत्मशोधनं न भवतीति स्फुटम् ॥१३॥

निगमागमसारज्ञा भक्ताः श्रीरामनिर्भराः ।
शरणागतिमेवैकां गृह्णन्त्यात्मप्रसादिनीम् ॥१४॥

आत्मप्रसादनोपायमाह–निगमागमेति । निगमागमसारज्ञाः=निगमा-

गमानामृगादिचतुर्वेदानामागमानां पञ्चरात्राद्यागमग्रन्थानां सारशास्त्रत्ववेत्तारः। श्रिया जानक्या सहितो रामः श्रीरामस्तस्मिन्निर्भरा भगवद्मार्गैकाश्रयभूता भक्ताः श्रीरामसेवकाः। एकामद्वितीयां आत्मप्रसादिनीं भगवच्छ्रीरामतोषिणीं शरणागतिमेवानन्यात्मनिवेदनरूपप्रपत्तिमेव तदुक्तमाचार्यसार्वभौमेन "सर्वविधसामर्थ्यहीनं दीनं मामवश्यं रक्षिष्यति सर्वविधसमर्थोऽनन्तवात्सल्यादिगुणैकमहार्णवो भगवान् श्रीराम इति महाविश्वासशाल्यध्यवसायात्मकं मत्प्रपदनं विधेहि" (गी० आनन्दभाष्यं १८।६६) इति। अत्रान्योपायव्यवच्छेदपर एवशब्दः। गृह्णन्ति स्वीकुर्वन्ति ॥१४॥

सकृदेव प्रपन्नाय कृता- श्रीराम याचना।
सर्वाभयविधात्री स्यात् सत्यं श्रीमुखभाषणम् ॥१५॥

प्रपत्तिस्वरूपं विस्फोटयन्नाहाचार्यसार्वभौमः (सकृदेवेति) प्रपन्नाय भगवच्छरणागतिस्वीकाराय सकृदेवैकवारमेव कृता समवहिता श्रीरामयाचना सकलकल्याणगुणकभगवतः श्रीरामचन्द्रविषयकप्रार्थना। सर्वाभयविधात्री भूतभौतिकादिसर्ववस्तूत्पन्नभीतितोऽभयसम्पादयित्री स्यात् सम्पद्येत। अस्मिन्नर्थे मृषात्वशंकां व्यपनोदति श्रीमुखभाषणं श्रिया सहितं मुखं श्रीमुखं तत्सम्बन्धिभाषणं कथनम्, "द्विशरान्नाभिसन्धत्ते द्विः स्थापयति नाश्रितान्। द्विर्ददाति न चार्थिभ्यो रामोद्विर्नाभिभाषते" इत्युक्तेः। सत्यमवितथं भवतीति शेषः अत्रेदं तत्त्वं "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥" इति श्रीमद्वाल्मीकीये भगवद्वचनम्। अस्मिन् चरममन्त्रे 'सकृत्' पदत उपायान्तराभ्यां निवृत्तिः "एव" पदतश्चोपायान्तराभ्यां निरपेक्षता सूचिता वेदितव्या। 'प्रपन्नाये' ति पदतः प्रपत्तिरूपपरमोपायस्यालम्बनं" तवेति-पदतः श्रीजानकीजानेरुपायत्वप्रतिपादिता भवतीति ध्येयम्। 'अस्मि' पदेन भगवत्प्रपत्तिरूपोपायस्य 'इती' तिपदतोऽनन्यत्वञ्चाध्यवसितम्।

चकारेणागृहीतान्योगायस्य 'याचते' इतिपदत उपायसेवकाधिकारिणो लक्षणनिर्देशो भवति । 'अभय' पदतश्च भगवत्प्राप्तिप्रतिबन्धकापचार-पापाचाराहङ्कारादीनां निवारणम् 'सर्वभूतेभ्यो' इत्यत: प्राप्यप्रतिबन्धक-स्वरूपं निर्णीतमिति भाव्यम् 'ददामि' पदत: सर्वशक्तिमत्त्वमुपायस्य: । 'एतत्' पदतश्चासशयत्व निरुक्तम् । 'मम' पदतो निर्भरत्वानुसन्धानं, 'व्रतम्' पदतस्तु दृढ़ताय : प्रतिपादनमिति ज्ञेयम् । तात्पर्यार्थो वाक्यार्थ-प्रधानार्थोऽनुसन्धानार्थश्चेति चतुर्विधास्य व्यवस्था । श्रीभगवत्प्रसन्नतास श्रयणं तात्पर्यार्थः प्रथमः । प्रापकभगवत्स्वरूपनिरूपणं वाक्यार्थो द्वितीयः । परमेश्वरस्वरूपनिरूपणं प्रधानार्थस्तृतीय । निर्भरता-नुसन्धानमनुसन्धानार्थश्चतुर्थ इति संक्षेपः । विस्तरस्तु श्रीमदाचार्यप्रसा-दितश्रीवैष्णवमताब्जभस्करतः श्रीमहामहोपाध्यायकृतभास्करभाष्या-दिसद्ग्रन्थतश्चानुसन्धेयमित्यत्र विरम्यते ॥१५॥

ईश्वरप्रणिधानाच्च भगवद्धर्मपालनात् ।
आचार्यसंश्रयाच्चैव जोवो बन्धाद्विमुच्यते ॥१६॥

जीवात्मनो विमुक्तोपाय दर्शयति (ईश्वरप्रणिधानादिति) ईश्वर: साकेतनिलयभक्तकामधुक् परमेश्वर: श्रीरामस्तस्यप्रणिधानं "श्रवणं कीर्तनम् विष्णो: स्मरण पादसेवनम् । अर्चनं वन्दनं दास्यं सख्य-मात्मनिवेदनम् ।" इति लक्षितदिशा नवधारूपेष्वन्यतमेनानुध्यानं तस्मात् । भगवतो धर्म सनातनः परमवैदिकवैष्णवधर्मस्तस्य पालनं "यश्च रामं न पश्येत्तु यञ्च रामो न पश्यति । निन्दितः सः भवेल्लोके स्वात्माप्येन विगर्हते ॥ इति महर्ष्यनुमोदित-श्रीसीतारामाराधनरूप तस्मात् । यदा यदा हि धर्मस्य ग्लानि-र्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" ॥ "इति भगवत्प्रतिज्ञावाक्यादपि निरुक्तधर्मस्यैव निर्देशोवगम्यते

दुक्तं भगवता भाष्यकारेण "यदा हि मुक्तिसाधनस्य वेदविहितस्य र्णाश्रमोचितारम्भलक्षणस्य सामान्यधर्मस्य भगवदाराधनादिरूपविशेष- र्मस्य च लेशतोऽपि ग्लानिर्भवति" आ भा. ४।७। तथा "साधूनां दविहितधर्मानुष्ठायिनां मदनन्यभक्तानां परित्राणाय दुष्कृतां वैदिकाचार- रहितानां मद्भक्तिविधुराणां पापाचारपरायणानां विनाशाय धर्मसंस्था- पनार्थाय च वर्णाश्रमादिधर्माणां मदर्चनवन्दनकीर्तनदर्शनस्मरणादीनां मदाराधनलक्षणानां धर्माणाञ्च" (गीतानन्दभाष्ये ४।८ इति । तथा चास्मद्गुरवः श्रीमहामहोपाध्यायाः "धर्मस्य श्रुतिस्मृति- विहितस्य निःश्रेयससाधनस्य धर्मशब्देनात्र ग्रहणम् स च प्रवृत्तिनिवृत्ति- मार्गभेदेन द्विविधः । तदुक्तं बृहद्ब्रह्मसंहितायाम्

"धर्मः प्रवृत्तिमार्गाख्यो ह्येको राजसतामसः ।
निवृत्तिमार्गः सत्त्वाख्यो द्वितीयो भगवत्प्रियः ॥

( बृ. सं. २।७।२१ ) एवमुभयविधधर्मस्यात्र ग्राह्यत्वेऽपि निवृत्तिधर्मे भगवतो निर्भरत्वं सूच्यते, प्रकरणात् । वर्णाश्रमधर्मस्य सामान्यधर्मत्वेन भगवदाराधनरूपस्य तस्य विशिष्टत्वेन परमधर्मत्वात् (गीतार्थचंद्रिका ४।७) इति अथ उक्तार्थे सामञ्जस्यम् । आचार्यस्य षडक्षरतारकश्रीराममहामन्त्रोपदेशकस्य संश्रयात् समाश्रयणादेव शरणागतिस्वीकारादिति भावः । एव शब्दोऽत्रान्योपायनिर्वर्तनपरकः । जीवो जीवात्मा बन्धनाद् भवबन्धनाद्विमुच्यते मुक्तो भवति" १६

भगवद्धर्मतत्त्वज्ञाः पञ्चसंस्कारसंस्कृताः ।
प्रपन्ना निर्भरा रामे वैष्णवा भुवि दुर्लभाः ॥१७॥

श्रीरामशरणापन्नवैष्णवानां भुवि दुर्लभत्वमाह–भगवदित्यादि । भगवतो धर्मो भगवद्धर्मो भगवद्धर्मस्य तत्त्वं जानन्तीति भगवद्धर्मतत्त्वज्ञाः

श्रीवैष्णवधर्मतत्त्ववेत्तारः पञ्चचते संस्काराः पञ्चसंस्कारास्तैः संस्कृताः

"पुंड्रं मुद्रा तथा नाम मन्त्रो यागश्च पञ्चमम् ।
अमी हि पञ्चसंस्काराः परमैकान्त्यहेतवः ॥"

इत्यागमोक्तप्रकारेणोर्ध्वपुण्ड्रधनुर्बाणभगवद्दास्यबोधनामतारक-श्रीमन्त्रराजयागाश्चेति पञ्चसंस्कारैः सद्गुरोः सुसंस्कृताः । अत्र यागशब्दो भगवत्पूजनपरकः तत्स्थाने भगवत्पूजायोग्यत्वसम्पादनाय श्रीरामानन्दीयश्रीवैष्णवसम्प्रदाये तुलसीमालाकण्ठे सर्वदा धार्यते । "तुलसी भगवतोर्भेदाभावे यागस्थाने तुलसीधारणं न विरोधस्तस्मान्नित्यं तुलसीं धारयेत्" इत्यागमप्रमाण्यात् तथा चात्र श्लोका अपि भवन्ति

"यत्कण्ठे तुलसी नास्ति ते नरा मूढमानसाः ।
अन्न विष्ठा जलं मूत्रं रक्तं तेषां पयो भवेत् ॥
ततः सर्वेषु कालेषु धार्या तौलसमालिका ।
क्षणार्धं तद्विहीनो यो विष्णुद्रोही भवेन्नरः ॥
यज्ञोपवीतवद्धार्या सदा तुलसी मालिका ।
क्षणमात्रं परित्यागाद्विष्णुद्रोही भवेत्पुमान् ॥
(श्रीरामपद्धतिः)

रामे श्रीदाशरथौ निर्भराः सर्वतोभावेन माम् रक्षिष्यतीति विश्वस्ताः प्रपन्नाः सर्वात्मभावेन श्रीरामशरणागतिस्वीकृताः सज्जनाः तच्चैतत्साकल्येन प्रतिपादितमाचार्यवर्येण गीतानन्दभाष्ये तथाहि-- "प्रार्थनांशेन शरणागतिपदवाच्य आत्मनिक्षेपांशेन न्यासपदवाच्यश्च प्रपत्तियोग एव । आनुकूल्यस्य संकल्पः प्रातिकूल्यस्यवर्जनम् । राक्षिष्य-तीति विश्वासो गोप्तृत्ववरणं कार्पण्यञ्चेति इमानि प्रपत्तियोगस्य पञ्चाङ्गानि । तथाहि शास्त्रम्—

आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ।।
आत्मनिक्षेपकार्पण्यं षड्विधा शरणागतिः ।। (अ० सं०)

इति । पञ्चापीमानि प्रपत्त्यङ्गानि बोधायनवृत्तिकृता भगवता श्रीपुरुषोत्तमाचार्यबोधायनेन श्रीपुरुषोत्तमप्रपत्तिषट्के विहितानि । तथाहि--

राम दीनोऽनुकूलोऽहं विश्वस्तोऽप्रातिकूल्यवान् ।
त्वयि न्यस्यामि चात्मानं पाहि मां पुरुषोत्तम ! ।।''

इति । एतादृशा वैष्णवा भागवताः भुवि क्षितौ पृथिव्यां दुर्लभा दुःखसंप्राप्याः सुमहत्पुण्यलभ्या न साधारणेनेति भावः ।।१७।।

रामात्परतरं तत्त्वं श्रुतिसिद्धान्तगोचरम् ।
तत्त्वाज्ञा नैव पश्यन्ति तमेव शश्वदाश्रयेत् ।।१८।।

निगमान्तवेद्यं परतत्त्वं निर्णयन्नाह रामादिति तत्त्वं जानन्तीति तत्त्वज्ञाः श्रुतितत्त्वपारंगता महर्षयः । रामात् परपुरुषभगवच्छ्रीरामचन्द्रात् । परतरं परादपि परतरं सर्वकारणकारणमित्यर्थः । वादिप्रतिवादिभ्यां निर्णीतोऽर्थः सिद्धान्तः श्रुतीनां सिद्धान्तः श्रुतिसिद्धान्तस्तैर्गोचरः परिदृश्यमानः श्रुतिसिद्धान्तरूपः चक्षुषा अनुभूयमानः श्रुतिविषयो वेति भावः । तमेतादृशं परतत्त्वं नैव पश्यन्ति नावलोकयन्ति । अन्योपायनिवर्तनपर एवशब्दः । प्रसज्यप्रतिषेधात्मकश्च नशब्दः श्रीरामचन्द्रादपरं विशिष्टतत्त्व नास्ति । अत एव शश्वन्निरन्तरं तमेव समाश्रयेत् । अत्रेयमभिसन्धिः—

''रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते (रा० ता०)

"परात्परो निखिलहेयप्रत्यनीकगुणाकरो जगदादिकारणम-मिततेजोराशिब्रह्मादिदेवैरप्युपास्यः स श्रीभगवान् दाशरथिरेव प्राप्यः-
(मै० महोपनिषद्)

"सृष्टेरादौ विवेकाय कल्याणस्य नृणां सदा ।
परात्परेण रामेण सीतया सहितेन च ॥
यूयमुत्पादिता देव्योऽनन्तानित्यविभूतयः ॥
(वा संहिता)

"राम एव परं ब्रह्म रामो नित्यनिरामयः ।
रामात्परतरो नास्ति सत्यं जानीहि शङ्कर ॥
(अ० रा०)

"विज्ञानहेतुं विमलायताक्षम्
प्रज्ञानरूपं स्वसुखैकहेतुम् ।
श्रीरामचन्द्रं हरिमादिदेवं
परात्परं राममहं भजामि ॥" (स०सं०)

"परं ब्रह्म परं तत्त्वं परं ज्ञानं परं तपः ।
परं बीजं परं क्षेत्रं परं कारणकारणम् ॥"
(श्रीमद्रा० सुन्दर०)

इत्यादि श्रुतिस्मृतिसामञ्जस्यात्परतत्त्वं श्रीरामचन्द्रमेव समाश्रयेत्कल्याणकामुको जीव इति भावः ॥१७॥

इदं हि सर्वशास्त्राणां सारभूतं रहस्यकम् ।
सर्वान्तर्यामिणं रामं ज्ञात्वा सेवेत शुद्धधीः ॥१८॥

भवरोगसन्तरणकामुकैः सेव्यमुपदिशति-इदमिति । शुद्धा धीर्यस्य सः शुद्धधीः स्वच्छान्तरात्मा निर्मलमतिको भवभीरुर्जीव इत्यर्थः ।

सर्वान्तर्यामिणं सर्वजडचेतनमभिव्याप्य स्थितम् । रामं भगवन्त श्रीरामम् ज्ञात्वा अन्वयव्यतिरेकेण सम्यगवबोध्य स्वान्त सन्निवेश्य वा अर्चनादि-नवधारूपेण सेवेत समाश्रयेत । इदं पूर्ववर्णितमेव सर्वशास्त्राणां श्रुतिस्मृत्यादिनिखिलशास्त्राणां सारभूतं ग्राह्यसारस्वरूप रहस्यकं गुह्यातिगुह्यपदार्थजातमस्तीति शेषः ॥१९॥

भगवद्भक्तिहीनानां द्वेषिणाञ्च गुरोः सताम् ।
न श्रोतव्य न मन्तव्यं वाक्यं भक्तिविवर्जितम् ॥२०॥

श्रेयस्कामुकजनैर्वर्ज्यपदार्थमवतारयति । भगवदिति---भगवतो भक्तिर्भगवद्भक्तिः श्रीरामस्यार्चनादिरूपशरणागतिस्तैर्हीनानां विहीनानां जनानाम् । गुरोः स्वस्य परस्य च शिक्षादीक्षादिगुरोस्तथा सतां महात्मनां च द्वेषिणां विद्वेषिजनानाम् । भक्तेर्विवर्जितं भक्तिर्विवर्जित शास्त्रीयमर्यादाशून्य वाक्य वाणीम् न श्रोतव्यं कर्णपथमाकर्तव्यम् । नापि मन्तव्यं विचार्य स्वाचारे प्रयोक्तव्यं हेयत्वादिति भावः ॥२०॥

ममताशून्यचेतस्कः पद्मपत्रमिवाम्भसा ।
प्रारब्धभोगपर्यन्तं देहकार्याणि साधयेत् ॥ २१ ॥

तर्हि कथं वर्तितव्यममुस्मिन् ससारे मुमुक्षुभिः सर्वत्र स्वानुकूल्या-भावाद् यावज्जीव प्रवर्तनस्य चावश्यकत्वादत आह ममतेति-अम्भसा जलेन पद्मपत्रमिव कमलदलमिव ममताया इदं ममेत्यादि व्यवहारतः शून्यो रहितश्चेतोऽन्तःकरणं यस्य ममताशून्यचेतस्को जागतिकव्यवहारे सर्वथा ममत्वशून्यः सन् प्रारब्धभोगपर्यन्त पूर्वजन्माचरितकर्मफल-भोगपर्यन्त "नाभुक्तं क्षीयते कर्मेति श्रवणात् । परञ्च सर्वतोभावेन श्रीरामप्रपन्नानां तु प्रारब्धकर्मणोऽपि विनाशो भवतीति भाष्यकाराः । यथा-"साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भयसी ॥ इति वचन-

प्रामाण्यात् प्रारब्धस्यापि विनाशकश्च प्रपत्तियोग: इति (गीतानन्दभाष्ये १८।६६) अस्मिन् जन्मनि तु

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा- स्तेसङ्गोस्त्वकर्मणि"

इति श्रीभगवद्वाक्यानुसरन्तो नि:स्वार्थभावेन भगवत्प्रपन्ना: स्वकर्तव्यताकबुद्ध्या सर्वकर्माणि साधयित्वानिरहभावेन श्रीरामे समर्पयन्तीति तेषां कर्मबन्धनत्वाभाव इति भाव:।

देहकार्याणि देहरक्षणस्योचिताहारव्यवहारादिकार्याणि स्वास्थ्यो चितकर्मादीनि वा साधयेत् सम्पादयेत् ॥२१॥

**कायेन वाचा मनसा धनेन च जनेन च।**
**रामसेवा सदा कार्या भवपाशविमोचिनी ॥ २२ ॥**

देहकार्याणि साधयेदित्युक्त तत्कथं साधनीयं केन साधनेन कस्य वा सेवा कार्येत्याकांक्षायामाह कायेनेति-कायेन शरीरेण स्वदेहेन वाचा वाण्या भगवत्प्रार्थनादिना मनसा मानसेन धनेन यथोपलब्धद्रव्यादिना जनेन सर्वात्मनिवेदनेन च सदा सर्वदा यावज्जीवमिति भाव:। भवस्य संसारस्य पाशो बन्धनं तं विमोचयतीति तादृशी रामसेवा भगवच्छ्रीरामचन्द्रसेवा कार्या करणीया। अत्रायं भाव: स्वस्ववर्णाश्रमादिश्रुतिस्मृत्यादिधर्मादिस्वरूपाणां यथार्थतोऽनुसरन्त एव भगवद्भक्त: कार्या न तु तत्त्यागेन तस्य भक्तिदार्ढ्यसाधनत्वोक्ते:। तथा च भगवान् बादरायण: "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" (ब्र०स०४।१।१६) व्याख्यातञ्च तत्तथैव भगवता भाष्यकृता अग्निहोत्रादिकं कर्म तु तत्कार्यायैव विद्याकार्यायैव कुत: ? तद्दर्शनात्। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" (बृ० ४।४।२२) इत्येवमादिश्रुतिष्वग्निहोत्रादीनां विद्यासाधनत्वदर्शनात्। अतो विद्योत्पत्त्यर्थमहरहरप्यग्निहोत्रादिकमनुष्ठेयमन्यथा

र्णाश्रमधर्मविलोपे कल्मषमानसस्य विद्योत्पत्तिरेव न स्यादतो विद्यार्थ-त्वेन तदनुष्ठानमावश्यकम्" (आ० भा०४।१।१६) इति तथैव श्रीमाग-तेपि—

"नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥
वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यांल्लिभते सिद्धिं रोचनार्था फलश्रुतिः ॥
य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥
लब्धानुग्रह आचार्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्या भिमतयाऽऽत्मनः ॥
(श्रीमद्भा० ११ अ० ३)

अत्र महापुरुषशब्देन श्रीरामचन्द्रस्यैव ग्रहणमिति तु तत्रैव—

ध्येयं सदा परिभवघ्नमभीष्टदोऽह
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिह प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ! ते चरणारविन्दम् ॥

इति श्लोकतः सामान्यरूपेण सन्निरूप्य विशेषतः—

त्यक्त्वा सुदुस्त्यजसुरेप्सितराजलक्ष्मीं
धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्
वन्दे महापुरुष ते चरणारविन्दम् ॥

इति समुदीरणान्निश्चीयते -

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।"

इति गीतावाक्यतोऽपि भगवत्परपुरुषश्रीरामचन्द्राभिधान-मित्यवगन्तव्यमित्यलं पल्लवितेन ।।२२।।

वात्सल्याज्जानकीदेव्याः साधु सद्गुरुसेवनात् ।
शश्वच्छ्रीरामचन्द्रो हि कृपापूर्णो भवेज्जने ।। २३ ।।

"नायमात्मा प्रचनेन लभ्यो न मेधया न बहुना श्रुतेन" (मु० ३।२।३) "न वेद यज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः" (गी० ११।४८) इत्यतश्चान्योपायेन परपुरुषप्राप्तिनिषेधश्रवणात् कथं जीवः श्रीरामचन्द्रं साक्षात्कुर्यादित्याशंक्य—"यमेवैष वृणुते स तेन लभ्यः" "भक्त्यात्वनन्यया शक्यः" इति भगवत्प्राप्त्युपायभूतप्रधान-स्वरूपं संस्मारयन्नाह—वात्सल्यादिति । साधूनां सज्जनानां सद्गुरूणां सनातनवेदमार्गप्रतिष्ठितश्रीवैष्णववर्गाणां च सेवनात् समुपसदनात् सच्छ्रीवैष्णवगुरुतः शरणागतिं स्वीकृत्य तदाज्ञापरिपालनाच्चेत्यर्थः । तथैव जानकीदेव्याः श्रीजनकनन्दिन्याः वात्सल्यात् परमकारुण्यात् तस्याः कारुण्यं "पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति"

लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् ।
कुर्वतामपि पापानि नैव कार्यमशोभनम् ।।"
(श्रीमद्रामायणे)

इत्यतो व्यक्तमेव । रामचन्द्रः श्रीमद्दाशरथिः जने स्वसेवके शश्वन्निरन्तरं कृपापूर्णः करुणापूर्णो भवेत् ।।२३।।

अधिष्ठात्रीं हि लोकना सर्वशक्तिशिरोमणिम् ।
ज्ञात्वा सीतां महादेवीं नान्यां किञ्चिद्व्रजेद् बुधः ।। २४ ।।

अधुनाऽनन्यत्वं प्रतिपादयति अधिष्ठात्रीमिति । लोकानां सर्वजनानाम् अधिष्ठात्रीमाधारभूतां सर्वस्वामिनीमिति यावत्। सर्वशक्तिशिरोमणि निखिलशक्तिशिरोरत्नस्वरूपाम् । महादेवीं महेश्वरीम् । सीतां श्रीजानकीदेवीं ज्ञात्वा सम्यगवबोध्य बुधः सुज्ञपुरुषोऽन्यामितरां किञ्चिदपि शक्तिविशेषं न भजेन्नैव कदापि सेवेत । अनन्यत्वहानेरिति भावः ॥ २४ ॥

राम एव परं ब्रह्म तत्समोऽभ्यधिकश्च कः ।
लौकिके वैदिके ध्येयः पूज्यश्च स हि कर्मणि ॥२५॥

परस्वरूपं प्रतिपादयति–राम एवेति । रामः श्रीरामचन्द्र एव पर ब्रह्म परात्परब्रह्म सकलजगन्निमित्तोपादानकारणभूतोऽस्ति

"रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥"

"यतो वै इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभि संविशन्ति" इत्यादिश्रुतेः, तेषां भगवच्छ्रीरामचन्द्राणां समः समानस्तुल्यो वा । अभ्यधिकोऽधिकश्चैश्वर्यशक्तिबलाद्यभिभूतः कोऽस्ति न कोऽपित्यर्थः । अतो लौकिके लोकसम्बन्धिव्यवहारे वैदिके वेदप्रतिपाद्ये कर्मणि च सः श्रीरामचन्द्र एव हि ध्येयो ध्यातुं योग्यः सर्वदा चिन्तनीयः पूज्यः पूजनीयश्चास्तीतिशेषः ॥ २५ ॥

भगवच्छक्तिसम्पन्नाः ससुरासुरमानवाः ।
तेन त्यक्तेन भुञ्जीथा यत्किञ्च भुवने सदा ॥ २६ ॥

सर्वपदार्थजातेषु भगवद्बुद्ध्यौदासीन्येन वर्तितव्यमित्युपदिशति (भगवदिति) सुराश्चासुराश्चेति सुरासुराः सुरासुरैः सहिता

मानवाः ससुरासुरमानवाः देवदानवसहितसर्वमनुष्याः (भगवतः श्रीरामस्य शक्तिः "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।" इत्युक्तरूपा तेन सम्पन्ना युक्ताः सन्तीति शेषः।

भुवि सकलमपि वस्तुजातं श्रीजानकीजानेरंशांशरूपेणैव वर्तते इति भावः "यतो वै इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयत्यभिसंविशन्ति" इति श्रुतेः तेन तस्मात्कारणाद् भुवनेऽमुस्मिन्संसारे यत्किच यत्किचिदपि पदार्थजातमस्ति तत्सर्वमपि सदा सर्वदा त्यक्तेन त्यागभावनयैव भुञ्जीथाः निखिलमपि भौतिकपदार्थजातं सर्वशेषि भगवच्छ्रीरामचन्द्राय पूर्वं सन्निवेद्य पश्चात्प्रसादरूपेण ससेवनीयमिति भावः। प्रपञ्चितश्चायमर्थो भगवता भाष्यकृता "ये तु परमात्मने तदङ्गभूतदेवेभ्यश्च न निवेदयन्ति स्वात्मकारणादेव पचन्ति ते हि पापबुद्धयोऽघमेव देवैर्दत्तस्य पुनरतेभ्यः पक्वान्ननैवेद्यरूपेणाप्रदायस्वार्थमात्रे प्रयुक्तस्याघौघोत्पादकत्वादघमित्युपचर्यते तदेव ते भुञ्जते। "केवलाघो भवति केवलादी" इति श्रुतेः। तथैवोक्तं मानवेपि शास्त्रे।

विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः।
विघसं भुक्तशिष्टं स्याद्यज्ञशिष्टं तथाऽमृतम्॥ (३-२८५)

तस्माद्देवनिर्वेदितान्नभोजिना भवितव्यं पुरुषेण" (गीतानन्दभाष्यम् ३।१३) इत्यादिरूपेण॥ २६॥

ज्ञानयोगात् क्रियायोगाद् भक्तियोगाच्च सर्वथा।
दैन्यादात्मार्पणं श्रेष्ठं प्रोक्तं श्रीरामतोषकम्॥ २७॥

अथाखिलैश्वर्यशालिनिखिलगुणगणनिचय– परमकारुणिकश्रीरामतोषकारणमाह (ज्ञानयोगादिति) अथवा प्रारब्धातिरिक्तकर्मनिवर्तकोऽसकृदाप्रयाणादनुष्ठेयश्च भक्तियोगः "अन्तकाले च मामेव

स्मरन्मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः इत्यादि भगवद्वचनप्रामाण्यादन्तिमस्मृतिमपेक्षते,

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ इति ॥

भगवच्छ्रीरामवचनप्रामाण्यात् सकृदेवानुष्ठेयः "साध्यभक्ति-स्तु सा हन्त्री प्रारब्धस्यापि भूयसी" इतिवचनप्रामाण्यात् प्रारब्धस्यापि विनाशकश्च प्रपत्तियोगः ।

"स्थिरे मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिरे स्मर्ता विश्वरूपं च मामजम् ॥

ततस्तं म्रियमाणं तु काष्टपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥ इति ॥

भगवदुक्तेः प्रमाणतयाऽन्तिम स्मृतिं नापेक्षते । इत्युभयोर्भक्ति-योगप्रपत्तियोगयोर्विशेषः" (गीतानन्दभा-१८।६६) इति भगवद्भाष्य-कारीयसुधोपमां वाणीं स्मरन् भक्तिज्ञानक्रियायोगादपि प्रपत्तियोगस्य श्रैष्ठ्यं साधयति ज्ञानयोगादिति दैन्यात्-दीनताया भावो दैन्यस्तस्मात्

रामदीनोऽनुकूलोऽहं विस्वस्तोऽप्रातिकूल्यवान् ।
त्वयि न्यस्यामि चात्मानं पाहि मां पुरुषोत्तम ॥ (प्रपत्तिषट्कम्)

इत्याचार्य प्रदर्शितदिशा दीनभावेन सर्वथा सर्वप्रकारेण "न गतिर्जानकीनाथ ! त्वां विना परमेश्वर" इत्युक्तप्रकारेणान्योपायशून्येनेति भावः । आत्मनोऽर्पणमात्मार्पणं स्वानन्यतावेदनम् ।

"त्वमेवासि वित्तं च विद्या त्वमेव
त्वमेवासि माता पितापि त्वमेव
त्वमेवासि हे नाथ ! सर्वं मम त्वां
श्रये राघवं सच्चिदानन्दरूपम् ॥ (श्रीदेवानन्दाचार्याः)

इत्युक्तप्रकारेणाखिलहेयप्रत्यनीकपरब्रह्मश्रीरामचन्द्रचरणयुगले स्वसर्वस्वप्रतिवेदनमिति भावः। क्रियाया भगवदनुकूल्यार्थं सम्पाद्यमानेतरक्रियायाः योगस्तस्मात् क्रियायोगादनन्यतानिष्ठरहितसम्पाद्यमानकर्मयोगादिति तात्पर्यम्। ज्ञानस्य योगो ज्ञानयोगस्तस्मात् परप्रपत्तिरहित शुष्कज्ञानाच्च श्रेष्ठमत्युत्तमम्।

"क्लेशोऽधिकतरस्तेषमव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःख देहवद्भिरवाप्यते" इति

भगवदुक्तेः। श्रिया श्रीजानक्या सहितो रमः श्रीरामस्तस्य तोषकं सन्तुष्टकारकं प्रोक्तमभिहितमाचार्यादिभिरिति शेषः।

"निश्चितेऽनन्यसाध्यस्य परत्रेष्टस्य साधने।
अयमात्मभरन्यासः प्रपत्तिरिति चोच्यते॥"

इति भरद्वाजसंहितोदितदिशा दीनभावेन भगवति श्रीरामे स्वात्मार्पणमेव प्रपत्तिः सा च -

"न जातिभेदं न कुल न लिङ्गं न गुणक्रियाः।
न देशकालौ नावस्थां योगोह्ययमपेक्षते (भा० सं )

इत्युक्त्या यागादिवज्जातिकोकुलदेशकालाद्यपेक्षां न संरक्षति। निषादराजगृध्रशवरीप्रभृतीनामुक्तजात्याद्यभावादपि प्रपत्तिप्राप्तिदर्शनात् द्रौपदीकुन्तीप्रभृतीनाञ्च स्त्रीत्वेऽपि तत्प्राप्त्यवलोकनात्। गजाजामिलयोश्च गुणकर्मराहित्येऽपि प्रपत्तिप्राप्त्यवलोकनात्। देशकालाभावे विभीषणस्य प्रह्लादध्रुवयोश्च प्रौढावस्थाविरहे द्रोपद्याश्चापवित्रदशायामपि भगवत्प्रपत्तिदर्शनात्। तथैवानन्दभाष्यकारा अपि श्रीवैष्णवमताब्जभास्करे

'सर्वेप्रपत्तेरधिकारिणो मताः शक्ता अशक्ता पदयोर्जगत्प्रभोः नापेक्ष्यते
तत्र कुलं बलं च नो न चापि कालो न हि शुद्धतापि वा इति।
सनत्कुमारसंहितायामपि—

"प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते ।
सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा ॥ इति

प्रपत्तियोगस्य ज्ञानकर्मयोगादपि श्रेष्ठत्वसम्पादनाभिप्रायस्तु केवलज्ञानकर्मयोगाद् भगवत्प्राप्त्यभावात् "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ (मु० ३।२।३) इति श्रुतेः । अत एव गीताचार्येणाप्युक्तम्–

"तमेव शरणं गच्छ सर्वभावेन भारत ! ।' इति शरणागतेः
"प्रपत्तिरानुकूल्यस्य सङ्कल्पोऽप्रतिकूलता ।

विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा ॥,, इति भरद्वाजसंहितोक्तलक्षणा षड्विधत्वमित्यनुसन्धेयम् । तासां पृथक लक्षणमपि तत्रैव–

"या स्वधर्मेऽभिरतिः सा भवत्यनुकूलता ।
वर्जनं प्रतिषिद्धानां तथैवाऽप्रतिकूलता ।
वेदवेदान्तविज्ञानाद् विश्वासो गोप्तरि स्वयम् ।
गोप्तृत्ववरणाद्यन्तु विष्णोरर्चादिकं मतम् ॥
प्रपत्तिरात्मनिक्षेपो दास्यचिह्नैकलक्षणः।

सतां देशिकमुख्यानां सेवा कार्पण्यमुच्यते ॥ इति ॥
आत्मनिवेदनन्त्वङ्गीतरेङ्गा इति विवेकः ॥ २७ ॥

श्रवणं द्वारमित्याहुर्भगवत्तत्त्वबोधकम ।
उत्तमश्लोकवीर्याणि नामानि श्रणुयात्ततः ॥ ३८ ॥

श्रवणस्य नवधाभक्त्यङ्गत्वेन प्रपत्तेः साधकत्वाद्विवृणोति (श्रवणमिति) भगवतः श्रीरामस्य यत्तत्त्वं तस्य बोधकं ज्ञापकम् । श्रवणं

श्रवणेन्द्रियं द्वारं साधकमित्याहुः सेतिहासपुराणवेदाचार्याः कथयन्तीति भावः तत उत्तमश्लोकवीर्याण्युत्तमयशसः श्रीरामभद्रस्य पराक्रमाणि–

"यस्यामलं नृपसदस्सु यशोऽधुनापि
गायन्त्यघघ्नमृषयो दिगभेन्द्रपट्टम्
तं नाकपालवसुपालकिरीटजुष्टम्..........."

इत्यादीनि, नामानि श्रीराम-रामभद्र-जानकीवल्लभेत्याद्यनन्त-नामानि च शृणुयात् श्रवणं कुर्यात् ॥ २८ ॥

प्रिया भागवता येषां तेषां किञ्चन्न दुर्लभम् ।
वशीभूतो हरिर्येषां हृदयाब्जान्न सर्पति ॥ २९ ॥

भगवद्भक्तश्रीवैष्णवसेवकानां भुवि किमपि दुर्लभत्वं नेति साधयत्याचार्यः (प्रिया इति) अवशो वशे सम्पद्यमान इति कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ( ५, ४, ५० ) इति च्विप्रत्यये "अस्य च्वौ (७।४।३२) इत्यनेनेत्वे च निष्पन्नः। अविच्छिन्नरूपेण स्मर्यमाण-भक्तिद्वारा स्ववशे भूतो हरिर्हरति स्वस्मरणकर्तॄ जनानामघमिति हरिः श्रीरामः ।

"अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्मिुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव । इत्युक्तेः ।

येषां जनानां हृदयाब्जात् हृदयकमलान्न सर्पति लेशतोऽपि नापगच्छति ते भागवता श्रीवैष्णवमहानुभावा येषां पुरुषाणां प्रिया मनोज्ञा अतिवल्लभा इति यावत्तेषां जनानां किंचित्किमपि वस्तुजात-मतिदुर्लभमुक्तमपीति भावः, दुर्लभं दुःखेन लब्धुं योग्यं नास्तीति शेषः ॥ २९ ॥

देशान्समाश्रयेत्पुण्यान् भगवद्भक्तिवर्धकान् ।
हरेरर्चाश्रितांश्चैव साधुभिः सेविताञ्छुभान् ॥ ३० ॥

पुण्योपायेन कालक्षेपविधानमाह (देशानिति) भगवतो भक्तिर्भगवद्भक्तिस्तस्या वर्धकास्तान् भगवद्विषयकप्रेमप्रवर्धकान् हरेर्भगवतोऽर्चाश्रितान्नर्चावतारसम्बन्धिदिव्यदेशसम्बद्धानयोध्याप्रभृतीन् साधुभिर्महात्मभिश्च सेवितान् समाश्रितान् शुभाञ्छुचीन् पुण्यान् पवित्रान् देशान्नेव दिव्यस्थलान्नेव समाश्रयेत्कालक्षेपार्थमवलम्बयेत् ।

"दिव्येषु देशेषु सतां प्रसंगं तदीयकैंकर्यपरायणो वै ।
यावच्छरीरान्तमहर्दिवं तत्कथामुदारां श्रृणुयाद्भवघ्नीम् ॥
(श्री वै० भा०) इत्याचार्योक्तेः ॥ ३० ॥

अर्चयेत्परया भक्त्या राममूर्तिं मनोहराम् ।
ससीतां सानुजाञ्चैव सपार्षदां च सायुधाम् ॥ ३१ ॥

दिव्यदेशनिवासपूर्वककालक्षेपविधायकेन का मूर्तिः सेवनीया इत्यत आह (अर्चयेदिति) परयोत्कृष्टया भक्त्याप्रेम्णा सीतया सहिताससीता तां श्रीजानकी सहितां, अनुजेन सहिता सानुजातां लक्ष्मणसहिता पार्षदेन श्री हनुमदादिना सहितामायुधेन धनुषादिना सहिता सायुधाताञ्च हरतीति हरा मनसोहरा मनोहरा तां हृष्टचित्तापहारिणीं राममूर्तिं श्रीरामचन्द्र छविमर्चयेत् पूजयेत् ॥ ३१ ॥

भगवच्छेषनिर्माल्यं नैवेद्यं चरणोदकम् ।
दुर्लभं ब्रह्मरुद्राद्यैरुपास्यं भक्तिवर्धकम् ॥ ३२ ॥
सेवनीयं सदा विज्ञैर्वैष्णवै रामवल्लभैः ।
साधुसद्गुरुपादाब्जतीर्थं परमपावनम् ॥ ३३ ॥

युग्मेनाऽधुना श्रीवैष्णवजनसंसेव्यमुपदिशति (भगवदिति) ब्रह्मरुद्राद्यैः कमलासनशंकरप्रभृतिदेवैरुपास्यमुपासितुं योग्यं परमसेवनीयम् ।

भक्तेःश्रीरामविषयकपरानुरक्तेर्वर्धकं वृद्धिकारकं पोषकमिति भावः । दुःखेनलब्धुयोग्यं दुर्लभं दुष्प्राप्यं परमपावनमतिपवित्रम् । भगवतः श्रीरामस्य शेषो भगवच्छेषो । भगवच्छेषं च तन्निर्माल्यं भगवच्छेषनिर्माल्यं भगवदर्पिततुलसीपुष्पविशेषम् । नैवेद्यं भगवन्निवेदितमिष्टान्नादिकम् । तथा चरणोदकं भगवन्निर्माल्यं चरणामृतमित्यर्थः । साधुश्चासौ सद्गुरुश्चेति साधु सद्गुरु सन्महात्मा श्रीमन्मंत्रराजप्रदाता श्रीवैष्णव-गुरुरित्यर्थस्तयोः पादाब्जतीर्थं चरणोदकं विज्ञैर्विद्वद्भिः । रामो वल्लभो यस्य तैरथवा रामस्य दाशरथे वल्लभस्तैर्वैष्णवैः श्रीवैष्णवमहानुभावैः सदा सेवनीयमङ्गीकरणीयम् ।

अत्रायमाशयः "परं मोक्षमवाप्नोति प्रसादाज्जगतीपतेः" (प० पु० क्रियायोगसारखण्ड अ० १३)

,'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि " (भा० ११।६।४६।)

"ब्रह्महत्यादिकं पापं मनोवाक्कायकर्मजम् ।
कोटिजन्मार्जितं नश्येद्रामभुक्तान्नभक्षणात् ।। (श्रीरा० मा० ३।७०)

इत्यादिमाहात्म्यश्रवणात् कैरपि भगवदनिवेदितं वस्तुजातं न सेवनीयं, किमुत श्रीवैष्णवैः । ब्रह्मवैवर्त्तपुराणेऽपि श्रीवैष्णवा-नामुक्ताशयसमर्थकं वाक्यमुपलभ्यते ।

वैष्णवाश्च न खादन्ति नैवेद्यभोजिनः सदा (ब्र० ख० १०।५)

इति । भगवन्निवेदितान्नादिवर्जने दोषश्च–

"रामार्चायाः प्रसादन्तु न भुञ्जीत विधे यदि ।
महादुःखार्दितो भूत्वा रौरवं नरकं व्रजेत् ।।इति (श्रीरा०मा०)

"शुभानि कर्माणि" समर्पयेत्सदा रामाय भक्ष्य च निवेद्य भक्षयेत्— इति श्रीवैष्णवमताब्जभास्कराच्चावगम्यते । "रामाय

भक्ष्यञ्च निवेद्य भक्षयेत्" इत्याद्युक्त्या कदापि कालेऽनिवेदिन्नादिकं न सेवनीयं दोषयुक्तत्वादिति स्वभावसिद्धम्

"विष्णोः पादोदकं पुण्यं नित्यं ये भुञ्जते नराः ।
तेभ्यः पापाः पलायन्ते वैनतेयादिवोरगाः ॥" (ब्रह्मवै० १०।५१

इति वचनाद्भगवत्प्रसादवत्तच्चरणामृतमपि श्रीवैष्णवैः सदा सेवनीयम् । तन्निर्माणप्रकारश्च "उदकं चन्दनं चक्रं शंखं च तुलसीदलम् । घण्टानादः शिला ताम्रमष्टाभिश्चरणोदकम्" इत्युक्तरीत्या बोध्यः ।

"यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ (श्वे०)

इति श्रौतवचनाद्यथा सकलकल्याणनिलये भगवति श्रीरघुनाथे पराभक्तिरभिधीयते तथैव स्वाचार्यवैष्णववर्येष्वपीति शास्त्रवित्समयः । गुरुप्रसादसेविनां सर्वदुर्लभा भावश्च समर्थितः "गुरोः प्रसादमासाद्य न किंचिद्दुर्लभं नृणाम् (भा० ६।७।२४) इतिवचनेन सर्वदेवमयबुद्ध्या-संसेवनीयमिति च तत्रैव ।

"आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः (भा० ११।१७।२७) इति तथा पद्मपुराणे च–

"नास्ति तीर्थं गुरुसमं बन्धच्छेदकरं द्विज ।" (भू० खं० १२३अ०)
"गुरावीश्वरबुद्धिश्च तदाज्ञापरिपालनम्" इति (हनुमत्संहितायां च)

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्माता गुरुः पिता ।
गुरुर्बन्धुर्गुरुर्मित्रं गुरुरेव सुखप्रदः ॥
प्रातरुत्थाय सच्छिष्यः स्वगुरोः सम्मुखागतः ।
साष्टांगं प्रणमेन्नित्यं परया श्रद्धयान्वितः ॥

रुष्टेषु सर्वदेवेषु रक्षतीह रमापतिः ।
रुष्टे रमापतावत्र गुरू रक्षां करोति ह ।।
कोऽपि रक्षाकरो नास्ति गुरौ संरुष्टतां गते ।
ततः सर्वप्रयत्नेन प्रसाद्यो गुरुरञ्जसा ।।, (वा० सं०)

तथाविधं प्राप्यमथो सुवैष्णवः सुचिन्तयन्नित्थमनुक्षण प्रिय ।
सदा सदाचाररतं गुरुं वरं, ज्ञातुं भजेताखिलसंशयच्छिदम् ।।
(श्रीवै० भास्कर)

"तत्र भागवतान्धर्माञ्छिक्षेद् गुर्वात्मदैवतः ।
अमाययानुवृत्या यैस्तुष्येदात्मप्रदो हरिः ।। (भा० ११।३।२२)
ये गुरोरवज्ञां कुर्वन्ति पापिष्ठाः पुरुषाधमाः ।
न तेषां नरकक्लेशनिस्तारो मुनिसत्तम ।।
ये गुरुद्रोहिणो मूढाः सततं पापकारिणः ।
तेषाञ्च यावत्सुकृतं दुष्कृतं स्यान्न संशयः ।। (अ० सं०)

इत्यादिवचोभिश्च श्रेयोर्थिभिः सदा गुरुपरायणेन भाव्यं न तु तद्विपरीततयेति व्यज्यते ।

परञ्चात्र गुरुविषये सावधानेनावधेयं श्रेयोर्थिभिः यतो विरक्त-श्रीवैष्णवादन्यमन्त्रोपदेष्टा स्वतोऽसारसंसारे परिबद्धतयासर्वथाऽसमर्थ-स्तरयितुमन्यान्नतो विरक्तश्रीवैष्णव एव गुरुः कर्तव्यः ।

"योगी जङ्गमसन्यासी न चास्य ब्राह्मणस्तथा ।
सत्यं सत्यं मम वाक्यं दीक्षागुरुश्च वैष्णवः ।।
पाषाणस्यक्रियते नौका सा तु भारं न धारयेत् ।
गृही गुरुर्नकर्त्तव्यो न तरेन्न च तारयेत् ।। (ना० गीता)

इत्यादि वचनात् । तथैव श्रीभारद्वाजसंहितायामवैष्णवदीक्षा-ग्रहणविषये--

"न्यासे वाप्यर्चने वाऽपि मंत्रमेकान्तिनः श्रयेत् ।
अवैष्णवोपदिष्टेन मंत्रेण न परागतिः॥ (१:३७)
(इति तत्रैवाग्रे)

स्वयं वा भक्तिसम्पन्नो ज्ञानवैराग्यभूषितः ।
स्वकर्मनिरतो नित्यमर्हत्याचार्यतां द्विजः ॥ (१।४०)

नाचार्यः कुलजातोऽपि ज्ञानभक्त्यादि वर्जितः (१।४१)

इत्याद्युक्ते ज्ञानवैराग्यादिसाधनसम्पन्नपरमविरक्तश्रीवैष्णव एवाऽऽचार्यत्वेन स्वीकर्तव्यो भवाम्बुधि ततुमभिलषद्भिरिति । अत एव च भगवती श्रुतिरपि "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् (मु० १।२) इत्यादिवाक्येनोक्तार्थं पोषयति ।

"गुरोः पादोदकं पीत्वा गुरोरुच्छिष्टभोजनम् ।
गुरुमूर्त्तेः सदाध्यानं गुरोर्मन्त्रं सदा जपेत् ।
ये चाश्नन्ति गुरूच्छिष्टं भावेन भक्तितः सदा ।
ते तु बाह्यान्तरःपूतास्तरन्ति भवसागरम् ॥ (अमररा० ५३)

इत्युक्त्या च शिष्यजनैः स्वाचार्यचरणोदकं भुक्तावशेषादिकञ्च-सेवनीयमसकृदिति शास्त्रवित्समयः ।

समेषामपि भगवद्भक्तानामिदं प्रधानदैनिक कर्त्तव्यं यत् स्वेष्ट-देवाराधनं स्वाचार्याराधनं स्वसम्प्रदायाचार्याराधनं तत्तत्प्रातिकृत्याराधनं वाऽसन्निहितत्वे विधातव्यम् । भगवद्भक्तश्रीवैष्णवादिविषयेऽपि शिष्टाचारादिव्यवहारः स्वाचार्यवदेव सम्पादनीयः। यतस्ते जगत्पवित्र-कारिणस्तीर्थानपि पूयन्ति । अत्र चानन्दभाष्यकारभगवत्पादानां श्लोकाभवन्ति ।

"चापादिपञ्चायुधचिह्निताङ्कः समीक्ष्य हृष्टश्च हरिः प्रियानसौ ।
तथाविधान्भक्तिपरः समर्चयेत् सुवैष्णवाञ्जन्मफलादि संस्तुवन् ॥

पञ्चायुधाङ्का भुवि वैष्णवा ये मुखाग्रजक्षत्रियवैश्यशूद्राः ।
स्त्रियस्तथान्येऽपि च विष्णुरूपा जगत्पवित्रप्रपवित्रिणस्ते ।।

ते सर्वतीर्थाश्रमभूतदेहा देशे महाभागवता वसन्ति ।
यत्रैव तद्दर्शनतत्स्थितिभ्यां जातः सुपुण्यो निखिलाघशून्यः ।।
तदर्चनात्तत्पदनीरपानात्तत्सङ्गतेस्तत्प्रणतेर्विधानात् ।
तद्भोजनानन्तरभोजनाच्च स्यात्कोटिजन्मार्जितपापनाशः ।।

तथैव श्रीभागवतेऽपि— (श्री वै० भा०)

"अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ।। (११।२।४७)

यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ।
साधवस्समुदाचारास्ते पूयन्त्यपि कीटकाः ।। (७।१०।१९)

"श्रीविष्णोर्वैष्णवानाञ्च पावनञ्चरणोदकम् ।
सर्वतीर्थमयं पीत्वा कुर्यादाचमनं न हि",, (अगस्त्यसंहिता)
"श्रीवैष्णवांघ्रिसंस्पर्शादात्मन शुद्धिमाचरेत् ।" (वृ०ब्र०सं० ३।७)

"वैष्णवं जनमालोक्य नाभ्युत्थानं करोति यः ।
प्रणयादरतो विप्र ! स नरो नरकातिथिः" (पाद्मे)

"यो हि भागवतं लोकमुपहासं नृपोत्तम ! ।
करोति तस्य नश्यन्ति चार्थधर्मयशःसुताः ।।
दुर्लभं दर्शनं नूनं वैष्णवानां यथा हरेः (ब्रह्म वै० पु०)

इत्यादिस्मृतिपुराणवचनसमुदायान्निश्चीयते परमभगवद्भाव-सम्पन्नश्रीवैष्णवजनदर्शनं लोके दुर्लभं सति दर्शने त्वीशबुद्ध्या ससेवनीयस्सर्वतो भावेन नावमन्तव्यः कदापि, तत एव च दीक्षादिकं सम्प्राप्य नरतनुः सफलनीयाइत्यलं बहुपल्लवितेन ।। ३२ । १३ ।।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्भक्तिपरायणैः ।
स्त्रिया सहैव कर्तव्यं सदा श्रीरामपूजनम् ॥ ३४ ॥

सच्छ्रीवैष्णवाद् गृहीतादीक्षाणां सर्वजनानां श्रीरामपरिचर्याधिकार इत्याह (ब्राह्मणैरिति) भक्तिपरायणैः परमश्रद्धाधनसम्पन्नैः श्रीवैष्णवाद् गृहीतदीक्षै र्ब्राह्मणैः विप्रैः क्षत्रियैर्वैश्यैः शूद्रैश्च स्त्रिया सहैव श्रीरामपूजनं श्रीरामार्चनवन्दनसेवनादिकं कर्तव्यं विधातव्यमित्यर्थः ॥३४॥

प्रतिबन्धो न विद्येत हरेराराधने क्वचित् ।
सर्वपूज्यः सदा पूज्यो रामो भुवनपावनः ॥ ३५ ॥

श्रीरामसेवायां देशकालादिनियमाभावं सर्ववर्गाधिकारञ्च शास्ति-प्रतिबन्ध इति । हरेः श्रीरामस्याराधने सम्पूजने क्वचित्कस्मिन्नपि देशकालादिविशेषे प्रतिबन्धो बाधको निषेधको न विद्यते स्वश्रेयसे शारीरदेशकालपवित्रापवित्रादिरूपप्रतिबन्धकाभावो भगवत्पूजा विषय इति तात्पर्यम्, यतः श्रीरामचन्द्रो भुवनानां सम्पूर्णलोकानां पावनः पवित्रकारको रामः श्रीरामचन्द्रः सदा सर्वदा सर्वपूज्यः सर्वजनपूजनीयोऽस्तीति शेषः ॥ ३५ ॥

दीक्षितेन विशेषेण चोर्ध्वपुण्ड्रादिकं क्वचित् ।
सूतके मृतके चापि न त्याज्यं रामपूजनम् ॥ ३६ ॥

"व्रतिनो मन्त्रपूतस्य साग्निकस्य द्विजस्य च ।
ब्रह्मनिष्ठस्य यतिनो न हि राज्ञाञ्च सूतकम् ॥
(गरुडपुराण अ० १३)

इति वचनाच्छ्रीवैष्णवदीक्षादीक्षितेन सूतकादिष्वपि भगवत्परिचर्या न त्याज्येत्याह (दीक्षितेनेति) दीक्षितेन श्रीरामषडक्षरमहामन्त्र-

राजदीक्षागृहीतेन विशेषेण विशेषतया सूतके जन्मसूतके मृतके मृत्युसूतके क्वचिदपि रामपूजनं श्रीरामपूजामूर्ध्वपुण्ड्रादिकं शुभसूचक-नित्यकर्मादिकं च न त्याज्यं न हेयमुक्तावसरेऽपि सदा स्वक्रिया कार्येति भावः ॥ ३६ ॥

आत्मरूपं सदा चिन्त्यं सच्चिदानन्दरूपिणम् ।
सेवासुखप्रदं शश्वद्रामाधीनं निरामयम् ॥ ३७ ॥

सर्वदाचिन्त्यस्वरूपमाशास्त्यात्मरूपमिति- सच्च चिच्चानन्दश्चेति सच्चिदानन्दं रूपमस्यास्तीति रूपी सच्चिदानन्दं रूपं यस्य तमात्मस्वरूपम् । सेवासुखप्रदं सेवयैव सुखप्रदं श्रीसीतारामपरिचर्यासुखप्रदमिति भावः शश्वन्निरन्तरं रामाधीनं श्रीरामचन्द्राधीनं निरामयमामयरहितं षड्विधविकारराहित्यमित्यर्थः । आत्मनो रूपमात्मरूपं जीवस्वरूपं सदा निरन्तरं चिन्त्यं विचारणीयम् ॥ ३७ ॥

साकेतनायको रामो जगतः कारणं परम् ।
क्रियाः सांसारिकाः सर्वास्तदधीना हि निश्चिताः ॥ ३८ ॥

'यतो वै इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इत्युदीरितप्रकारेण सर्व जागतिकं वस्तु श्रीरामाधीन-मतस्सर्वैस्तत्परतयैव वर्त्तितव्यमित्याह (साकेतनायक इति) साकेतस्य तदाख्यदिव्यधाम्नो नायकः स्वामी रामः श्रीरामचन्द्रो जगतः संसारस्य परं मुख्यं कारणमस्ति, यतः सांसारिका जागतिकाः संसारसम्भूताः सर्वाः समस्ता अपि क्रियाः क्रियाकलापास्तदधीनाः श्रीसाकेतनायकाधीना निश्चिताः सुनिश्चताः सर्वमपि वस्तुजातं श्रीरामायत्तमिति भावः ॥ ३८ ॥

देहान्ते चिन्मयं रूपं श्रीरामस्य परात्परम् ।
ध्यात्वा रसनया जल्पन् रामनामैव मोक्षदम् ॥ ३९ ॥

प्राकृतं देहमुत्सृज्य भित्त्वा भानोश्च मण्डलम् ।
गत्वा श्रीरामसान्निध्यं प्राप्नुयाद्धि कृतार्थताम् ॥ ४० ॥

"तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः (छा० ५।१०।१) नाडीरश्मिप्रवेशानन्तरमर्चिषमर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षादुत्तरायणमासांस्तेभ्यः संवत्सरं सवत्सराद्वायुं वायोरादित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैद्युतं वैद्युत्वाद्वारुणं वारुणादैन्द्रमैन्द्राद्धातृलोकं धातृलोकाद्विरजां तत्र स्नात्वा श्रीसाकेतलोकद्वारम्" (आ० भा० ४।३।३)

"मार्गं ततः सोऽर्चिरुपैति मुक्तक-
स्तथार्चिषोऽह्नोदिनतः सुरार्चितः ।
आपूर्यमाणं विविधैस्तु वासरैः
पक्षं प्रभूतोत्तमशर्मविज्वरः ॥ (श्रीवै७ भा०)

इत्यादिश्रुत्याचार्यप्रदर्शितप्रकारेण जीवात्मनः श्रीसाकेतगमनमार्गं प्रदर्शयति द्वाभ्याम् (देहान्त इति) देहस्यान्तो देहान्तस्तस्मिन् शरीरत्यागसमये श्रीरामस्य परात्परं सर्वोत्तमचिन्मयं ज्ञानस्वरूपं रूपं ध्यात्वा सम्यग्विचिन्त्य रसनया जिह्वया मोक्षदं सायुज्यमोक्षप्रदं राम-नामैव श्रीरामनाम एव जल्पन्नुच्चारयन् प्राकृतं पञ्चभूतसम्पृक्तं प्रकृतितत्त्वनिर्मितमिति भावः । देहं शरीरमुत्सृज्य सन्त्यज्य तथा भानोः सूर्यस्य मण्डलं परिधिं लोकमिति वा भित्त्वा भेदयित्वा सन्निधेर्भावः सान्निध्यं श्रीरामस्य सान्निध्यं श्रीरामसान्निध्यं श्रीसाकेतनायकसमीपतां गत्वा प्राप्य कृतार्थतां परमकृतकृत्यताञ्च प्राप्नुयात्समवाप्नुयात् ॥ ३९ । ४० ॥

मायातीते महादिव्ये साकेते रामवल्लभे ।
नित्या स्थितिः सदा भाव्या स्वात्मनो योगिदुर्लभा ॥ ४१ ॥

जींवात्मनः (श्रीसाकेतधामप्राप्त्यनन्तरं चिन्तनीयत्वं शास्ति-मायातीत इति) मायायाः स्वलीलाविभूतिरूपादिशक्तेरतीतः परस्तस्मिन् महादिव्ये दिव्यातिदिव्ये सर्वश्रेष्ठ इत्यर्थः। रामस्य वल्लभो रामवल्लभ स्तस्मिन् स्वातिशयप्रिये साकेते साकेतनामकदिव्यधाम्नि स्वस्यात्मा स्वात्मा तस्य योगिनां परमसाधकानां दुर्लभा दुःखेन लब्धुं योग्या नित्या नाशरहिता स्थितिः सदा सर्वदा भाव्या सुचिन्तनीया जीवेनेतिशेषः ।।४१।।

जनानां भ्रान्तमार्गाणामज्ञानध्वान्तशान्तये।
श्रुतिशास्त्रगुहाविष्ट- तत्त्वरत्नप्रकाशकः ।। ४२ ।।

सिद्धान्तदीपकश्चायमनन्तानन्ददीपितः।
भूयाद्भक्तजनानन्ददायकस्तत्त्वदीप्तये ।। ४३ ।।

इत्यनादिवैदिकश्रीसम्प्रदायप्रधानाचार्यनिन्दभाष्यकार–
श्री१११०८ जगद्गुरु–श्रीरामानन्दाचार्याचार्य–
सार्वभौमप्रधानशिष्य– श्रीमदनन्तानन्दाचार्यप्रणीतः
सिद्धान्तदीपकः समाप्तः।

स्वनिबन्धमुपसंहरन् फलश्रुतिं शास्त्याचार्यः श्लोकद्वयेन (जनाना-मिति) भ्रान्तः परित्यक्तोऽनादिवैदिकमार्गो येषां तेषां भ्रान्तमार्गाणां सन्त्यक्तवैदिकपथानां जनानां मनुष्याणामज्ञानमेव ध्वान्तोऽन्धकारस्त-स्य शान्तये निवृत्तयेऽपथात्परिवार्य सन्मार्गे योजयितुमित्यर्थः। अनन्तानन्देनैतदाख्यकाचार्यसार्वभौमानन्तानन्दाचार्यमहाभागेन दीपितः प्रज्वालितः श्रुतयश्च शास्त्राणि च तेषां गुहायां गह्वरे विष्टानां सन्निहितानां तत्त्वमेव रत्नं तस्य प्रकाशकः प्रकटकः सर्वश्रुतिशास्त्रान्तपातितत्त्वप्रकाशक इति भावः। तथा भक्तजनानां भगवत्कैङ्कर्यपरकजीवानामानन्दं ददातीति भक्तजनानन्ददायकः श्रीराम-सेवकजनानन्दप्रदायकोऽयं वादिप्रतिवादिभ्यां निर्णीतोऽर्थः सिद्धान्तः स्वा-

चार्यादिभिः श्रुतिस्मृत्यादियुक्तिप्रत्युक्तिभ्यां निश्चितार्थ इत्यर्थः। तं दीपयति प्रकाशयतीति सिद्धान्तदीपकः स्वनामधन्यप्रस्तुतप्रबन्धः । तत्त्वानां स्वाचार्यादिस्वीकृततत्त्वानां दीप्तये प्रकाशाय भूयाद् भवतु श्रीसम्प्रदाय-सम्मततत्त्वप्रकाशकपरो भूयादित्याशयः। अशीर्वचनात्मकमङ्गलाचरण-मिदमाचार्यपादानां ग्रन्थसमाप्तौ "मङ्गलादीनि मङ्गलमध्यानि मङ्गला-न्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्ये-तारश्च मङ्गलयुक्ताः स्युः, इतिमहाभाष्यप्रामाण्यात् ॥ ४२ । ४३ ॥

सिद्धान्तदीपके चेयं निर्मिता किरणावली
भूयात्सिद्धान्तबोधाय जानकीजानितुष्टये ॥

इति श्रीवेदमार्गप्रतिष्ठापनाचार्य- जगद्विजयिमहामहोपाध्याय-
श्रीस्वामि- रघुवराचार्य पादपद्मोपजीवि-
योगीन्द्र श्रीमत्परमहंसपरिव्राजकाचार्य- श्रीस्वामिरामप्रपन्नाचार्य-
श्रीशेषमठश्रीकौशलेन्द्रमठाधीशप्रणीता
सिद्धान्तदीपकस्य किरणावली
व्याख्या समाप्ता ! शुभंभूयात्



श्रीमते प्रस्थानत्रयानन्दभाष्यकाराय नमो नमः ।



समाप्तः

मातृभूमि प्रिंटिग प्रेस, चौड़ा रास्ता जयपुर ।